४–सिज्जंसवोत्ति, श्रीप्रभवस्वामिप्रहितसाधुमुखात् " अहो कष्टमहो कष्टं, तत्त्वं न ज्ञायते परम् " इत्यादि वचसा यज्ञस्तंभादधः श्रीशांतिनाथबिंबदर्शनादवाप्तधर्मा प्रव्रज्य, क्रमेण मनकनाम्नः स्वसुतस्य निमित्तं दशवैकालिकं कृतवान् ।

यतः—कृतं विकालवेलायां, दशाध्ययनगर्भितम् ।
दशवैकालिकमिति–नाम्ना शास्त्रं बभूव तत् ॥ १ ॥

अतः परं भविष्यंति, प्राणिनो ह्यल्पमेधसः ।
कृतार्थास्ते मनकवत्, भवंतु त्वत्प्रसादतः ॥ २ ॥

श्रुतांभोजस्य किंजल्कं, दशवैकालिकं ह्यदः ।
आचम्याचम्य मोदन्ता–मनगारमधुव्रताः ॥ ३ ॥

इति संघोपरोधेन, श्रीशय्यंभवसूरिभिः ।
दशवैकालिको ग्रंथो, न संवव्रे महात्मभिः ॥ ४ ॥

स चाऽष्टाविंशति (२८) वर्षाणि गृहस्थपर्याये, एकादश (११) व्रते, त्रयोविंशति (२३) युग० चेति सर्वायुर्द्वाषष्टि (६२)वर्षाणि परिपाल्य श्रीवीरादष्टनवति(९८)वर्षातिक्रमे स्वर्गभाक् ॥छ॥

५–पंचमोत्ति, श्रीशय्यंभवस्वामिपट्टे पंचम श्रीयशोभद्रस्वामी । स च द्वाविंशति (२२) वर्षाणि गृहे, चतुर्दश (१४) व्रते, पञ्चाशत् (५०) वर्षाणि युग० सर्वायुः षडशीति (८६) वर्षाणि परिपाल्य श्रीवीरादष्टचत्वारिंशदधिके शते(१४८)ऽतिक्रांते स्वर्गभाक् ॥ छ ॥

६–छट्ठो संभूयत्ति, श्रीयशोभद्रस्वामिपट्टे षष्ठो पदैकदेशे पदसमुदायोपचारात् संभूतेति श्रीसंभूतिविजयः, भद्दत्ति श्रीभद्रबाहुस्वामीत्युभावपि षष्ठपदधरावित्यर्थः । तत्र श्रीसंभूतिविजयो द्विचत्वारिंशत् (४२) व० गृहे, चत्वारिंशत् (४०) व्रते, अष्टौ (८) युग० चेति सर्वायुर्नवति (९०) वर्षाणि परिपाल्य स्वर्गभाक् ॥

श्रीभद्रबाहुस्वामी तु श्रीआवश्यकादिनिर्युक्तिविधाता । व्यंतरीभूतवराहमिहिरकृतसंघोपद्रव-निवारकोपसर्गहरस्तवनेन प्रवचनस्य महोपकारं कृत्वा पञ्चचत्वारिंशत् (४५) गृहे, सप्तदश (१७) व्रते, चतुर्दश (१४) युगप्र० चेति सर्वायुः षट्सप्तति (७६) परिपाल्य श्रीवीरात् सप्तत्यधिकशत(१७०)वर्षे स्वर्गभाक् ॥ छ ॥ ३ ॥

सिरिथूलभद्द सत्तम ७, अट्ठमगा महागिरी–सुहत्थी ८ अ ।
सुट्ठिअ–सुप्पडिबद्धा, कोडिअकाकंदिगा नवमा ९ ॥ ४ ॥

७–तत्पट्टे श्रीस्थूलभद्रस्वामी । ८–तत्पट्टे श्रीआर्यमहागिरि–श्रीआर्यसुहस्तिनौ । ९–श्रीआर्यसुहस्तिपट्टे श्रीसुस्थितसुप्रतिबद्धौ ।

व्याख्या–७ सिरिथूलभद्दत्ति, श्रीसंभूतिविजय–भद्रबाहुस्वामिनोः सप्तमपट्टः **श्रीस्थूलभद्रस्वामी** कोशाप्रतिबोधजनितयशोधवलीकृताखिलजगत् सर्व्वजनप्रसिद्धः । चतुर्दशपूर्वविदां पश्चिमः । क्वचिच्चत्वार्यन्त्यानि पूर्वाणि सूत्रतोऽधीतवानित्यपि । स च त्रिंशत्० ३० गृहे, चतुर्विंशति २४ व्रते, पंचचत्वारिंशत् ४५ युगप्रधाने, सर्वायुर्नवनवति ९९ वर्षाणि परिपाल्य श्रीवीरात् पंचदशाधिकशतद्वय २१५ वर्षे स्वर्गभाक् । अत्र कविः—

श्रीनेमितोऽपि शकटालसुतं विचार्य, मन्यामहे वयमसुं भटमेकमेव ।
देवोऽद्रिदुर्गमधिरुह्य जिघाय मोहं, यन्मोहनालयमयं तु वशी प्रविश्य ॥ १ ॥

श्रीवीरनिर्वाणात् चतुर्दशाधिकवर्षशतद्वये २१४ आषाढाऽऽचार्यात् अव्यक्तनामा तृतीयो निह्नवः ॥ छ ॥

८–अट्ठमगत्ति, श्रीस्थूलभद्रपट्टेऽष्टमौ पट्टधरौ श्रीआर्यमहागिरिः श्रीसुहस्ती चेत्युभावपि गुरुभ्रातरौ । तत्र श्रीआर्यमहागिरिर्जिनकल्पिकतुलनामारूढो, जिनकल्पिककल्पः । त्रिंशत् ३० गृहे, चत्वारिंशत् ४० व्रते, त्रिंशत् ३० युग० सर्वायुः शत १०० वर्षं परिपाल्य स्वर्गभाक् ॥

द्वितीयेनाऽऽर्यसुहस्तिना पूर्वभवे द्रमकीभूतोऽपि संप्रतिजीवः प्रव्राज्य त्रिखंडाधिपतित्वं प्रापितः । येन संप्रतिना त्रिखंडमितापि मही जिनप्रासादमंडिता विहिता, साधुवेषधारिनिजवंठपुरुषप्रेषणेनाऽनार्यदेशेऽपि साधुविहारः कारितः ॥ स च आर्यसुहस्ती त्रिंशत् ३० गृहे, चतुर्विंशति २४ व्रते, षट्चत्वारिंशत् ४६ युग० सर्वायुः शतमेकं १०० परिपाल्य श्रीवीरात् एकनवत्यधिकशतद्वये २९१ स्वर्गभाक् ।

यद्यपि श्रीस्थूलभद्रस्य पंचदशाधिकशतद्वय २१५ वर्षे स्वर्गो गुर्वावल्यनुसारेणोक्तः । श्रीमहागिरि--सुहस्तिनौ तु त्रिंशत् ३० वर्षाणि गृहस्थपर्यायावपि शत १०० वर्षजीविनौ दुषमासंघस्तोत्रयंत्रकानुसारेणोक्तौ ॥ तथा च सति श्रीआर्यसुहस्तिः श्रीस्थूलभद्रदीक्षितो न संपद्येत, तथापि गृहस्थपर्यायवर्षाणि न्यूनानि व्रतवर्षाणि चाधिकानीति विभाव्य घटनीयमिति ॥

तथा श्रीसुहस्तिदीक्षिताऽवंतिसुकुमालमृतिस्थाने तत्सुतेन देवकुलं कारितं तस्य च "**महाकाल**" इति नाम संजातं ।

श्रीवीरनिर्वाणात् विंशत्यधिकवर्षशतद्वये २२० अश्वमित्रात् **सामुच्छेदिक**नामा चतुर्थो निह्नवः । तथा अष्टविंशत्यधिकशतद्वये २२८ **गंग**नामा द्विक्रियः पंचमो निह्नवः ॥ छ ॥

९—सुट्ठिअत्ति, श्रीसुहस्तिनः पट्टे नवमौ श्रीसुस्थित–सुप्रतिबद्धौ, कोटिक–काकंदिकौ। कोटिशः सूरिमंत्रजापात् कोटयंशसूरिमंत्रधारित्वाद्वा। ताभ्यां कौटिकनाम्ना गच्छोऽभूत्, अयं भावः—श्रीसुधर्मस्वामिनोऽष्टौ सूरीन् यावत् निर्ग्रंथाः साधवोऽनगारा इत्यादि सामान्यार्थाभिधायिन्याख्याऽऽसीत् नवमे च तत्पट्टे कौटिका इति विशेषार्थावबोधकं द्वितीयं नाम प्रादुर्भूतं॥

श्रीआर्यमहागिरेस्तु शिष्यौ बहुल--बलिस्सहौ यमलभ्रातरौ, तस्य बलिस्सहस्य शिष्यः स्वातिः तत्त्वार्थादयो ग्रंथास्तु तत्कृता एव संभाव्यंते।

तच्छिष्यः श्यामाचार्यः प्रज्ञापनाकृत् श्रीवीरात् षट्सप्तत्यधिकशतत्रये ३७६ स्वर्गभाक्॥ तच्छिष्यः सांडिल्यो जीतमर्यादाकृदिति नंदिस्थविरावल्यामुक्तमस्ति। परं सा पट्टपरंपराऽन्येति बोध्यं॥ ४॥

सिरिइंददिन्नसूरि दसमो १० इक्कारसो अ दिन्नगुरू ११।
बारसमो सीहगिरी १२, तेरसमो वयरसामिगुरू १३॥ ५॥

१०—तत्पट्टे श्रीइंद्रदिन्नसूरिः। ११—तत्पट्टे श्रीदिन्नसूरिः। १२—तत्पट्टे श्रीसिंहगिरिः। १३—तत्पट्टे श्रीवज्रस्वामी।

व्याख्या—१०–सिरि इंदत्ति, श्रीसुस्थित–सुप्रतिबद्धयोः पट्टे दशमः श्रीइंद्रदिन्नसूरिः। अत्रांतरे श्रीवीर० त्रिपंचाशदधिकचतुःशतवर्षातिक्रमे ४५३ गर्दभिल्लोच्छेदी कालकसूरिः। श्रीवीरात् त्रिपञ्चाशदधिकचतुःशतवर्षातिक्रमे ४५३ भृगुकच्छे आर्यखपुटाऽऽचार्य इति पट्टावल्यां। प्रभावकचरित्रे तु चतुरशीत्यधिकचतुःशत ४८४ वर्षे आर्यखपुटाचार्यः। सप्तषष्ठ्यधिकचतुःशत-४६७वर्षे आर्यमंगुः। वृद्धवादी पादलिप्तश्च तथा सिद्धसेनदिवाकरो, येनोज्जयिन्यां महाकालप्रासाद-रुद्रलिंगस्फोटनं विधाय कल्याणमंदिरस्तवेन श्रीपार्श्वनाथबिंब प्रकटीकृतं, श्रीविक्रमादित्यश्च प्रतिबोधितस्तद्राज्यं तु श्रीवीर० सप्ततिवर्षशतचतुष्टये ४७० संजातं। तानि वर्षाणि चैवम्—

जं रयणि कालगओ, अरिहा तित्थंकरो महावीरो।
तं रयणि अवणिवई, अहिसित्तो पालओ राया॥ १॥

सट्ठी पालयरण्णो ६०, पणवण्णसयं तु होई नंदाणं १५५।
अट्ठसयं मुरियाणं १०८, तीस चिअ पूसमित्तस्स ३०॥ २॥

बलमित्त–भाणुमित्त, सट्ठी ६० वरिसाणि चत्त नहवाणे ४०।
तह गद्दभिल्लरज्जं, तेरस १३ वरिस सगस्स चउ (वरिसा) ४॥३॥

११–इक्कारसोत्ति, श्रीइन्द्रदिन्नसूरिपट्टे एकादशः श्रीदिन्नसूरिः ।

१२–बारसमोत्ति, श्रीदिन्नसूरिपट्टे द्वादशः श्रीसिंहगिरिः ।

१३–तेरसमोत्ति, श्रीसिंहगिरिपट्टे त्रयोदशः श्रीवज्रस्वामी । यो वाल्यादपि जातिस्मृतिभाग् नभोगमनविद्यया संघरक्षाकृत्, दक्षिणस्यां बौद्धराज्ये जिनेन्द्रपूजानिमित्तं पुष्पाद्यानयनेन प्रवचनप्रभावनाकृत् देवाभिवंदितो दशपूर्वविदामपश्चिमो वज्रशाखोत्पत्तिमूलं । तथा स भगवान् षण्णवत्यधिकचतुःशत ४९६ वर्षांते जातः सन् अष्टौ ८ वर्षाणि गृहे, चतुश्चत्वारिंशत् ४४ वर्षाणि व्रते, षट्त्रिंशत् ३६ वर्षाणि युगप्रधानपदे सर्वायुरष्टाशीति ८८ वर्षाणि परिपाल्य श्रीवीरात् चतुरशीत्यधिकपंचशत ५८४ वर्षान्ते स्वर्गभाक् । श्रीवज्रस्वामिनो दशपूर्व–चतुर्थसंहनन–संस्थानानां व्युच्छेदः ।

चतुष्कुलसमुत्पत्ति–पितामहमहं विभुं । दशपूर्वनिधिं वंदे, वज्रस्वामिमुनीश्वरं ॥ १ ॥

अत्र श्रीआर्यसुहस्तिश्रीवज्रस्वामिनोरंतराले १ श्रीगुणसुंदरसूरिः, २ श्रीकालिकाचार्यः, ३ श्रीस्कंदिलाचार्यः, ४ श्रीरेवतीमित्रसूरिः, ५ श्रीधर्मसूरिः, ६ श्रीभद्रगुप्ताचार्यः, ७ श्रीगुप्ताचार्यश्चेति क्रमेण युगप्रधानसप्तकं बभूव । तत्र श्रीवीरात् त्रयस्त्रिंशदधिकपंचशत ५३३ वर्षे श्रीआर्यरक्षितसूरिणा श्रीभद्रगुप्ताचार्यो निर्यामितः स्वर्गभागिति पट्टावल्यां दृश्यते, परं दुष्षमासंघस्तवयंत्रकानुसारेण चतुश्चत्वारिंशदधिकपंचशत ५४४ वर्षातिक्रमे श्रीआर्यरक्षितसूरीणां दीक्षा विज्ञायते तथा चोक्तसंवत्सरे निर्यापणं न संभवतीत्येतद् बहुश्रुतगम्यं ।

तथाऽष्टचत्वारिंशदधिकपंचशतवर्षान्ते ५४८ त्रिराशिकजित् श्रीगुप्तसूरिः स्वर्गभाक् । तथा वीरात् सपादपंचशत ५२५ वर्षे श्रीशत्रुंजयोच्छेदः सप्तत्यधिकपंचशत ५७० वर्षे जावडयुद्धार इति ॥ ५ ॥

सिरिवज्जसेणसूरी १४, चाउद्दसमो चंदसूरि पंचदसो १५ ।
सामंतभद्दसूरी, सोलसमो १६ रण्णवासरई ॥ ६ ॥

**१४तत्पट्टे श्रीवज्रसेनः । १५तत्पट्टे श्रीचंद्रसूरिः । १६तत्पट्टे श्रीसामंतभद्रसूरिः(वनवासी)**

**व्याख्या**—१४ सिरिवज्जत्ति, श्रीवज्रस्वामिपट्टे चतुर्दशः श्रीवज्रसेनसूरिः । स च दुर्भिक्षे श्रीवज्रस्वामिवचसा सोपारके गत्वा जिनदत्तगृहे ईश्वरीनाम्न्या तद् भार्यया लक्षपाकभोज्ये विषनिक्षेपविधानचिंतनश्रावणे सति प्रातः सुकाले भावीत्युक्त्या[ क्त्वा ], विषं निवार्य १ नागेंद्र, २ चंद्र, ३ निर्वृति, ४ विद्याधराख्यान् चतुरः सकुटुंबानिभ्यपुत्रान् प्रव्राजितवान् । तेभ्यश्च स्वस्वनामांकितानि चत्वारि कुलानि संजातानीति । स च श्रीवज्रसेनो नव ९ वर्षाणि गृहे,

षोडशाधिकशत ११६ व्रते, त्रीणि ३ वर्षाणि युगप्रधानपदे सर्वायुः साष्टाविंशतिशतं १२८ परिपाल्य श्रीवीरात् विंशत्यधिकषट्शत ६२० वर्षाते स्वर्गभाक् ॥

अत्र श्रीवज्रस्वामिश्रीवज्रसेनयोरंतरालकाले श्रीमदार्यरक्षितसूरिः श्रीदुर्बलिकापुष्प(मित्र)श्चेति क्रमेण युगप्रधानद्वयं संजातं। तत्र श्रीमदार्यरक्षितसूरिः सप्तनवत्यधिकपंचशत ५९७ वर्षाते स्वर्गभागिति पट्टावल्यादौ दृश्यते, परमावश्यकवृत्त्यादौ श्रीमदार्यरक्षितसूरीणां स्वर्गगमनानंतरं चतुरशीत्यधिकपंचशत ५८४ वर्षान्ते सप्तमनिह्नवोत्पत्तिरुक्तास्ति। तत्तत्त्वं बहुश्रुतगम्यमिति। नवाऽधिकषट्शत ६०९ वर्षान्ते दिगंबरोत्पत्तिः।

१५—चंदसूरित्ति, श्रीवज्रसेनपट्टे पंचदशः श्रीचंद्रसूरिः तस्माच्चन्द्रगच्छ इति तृतीयं नाम प्रादुर्भूतं। तस्माच्च क्रमेणाऽनेकगणहेतवोऽनेके सूरयो बभूवांसः।

१६—सामन्तभद्दत्ति, श्रीचंद्रसूरिपट्टे षोडशः श्रीसामंतभद्रसूरिः। स च पूर्वगतश्रुतविशारदो वैराग्यनिधिर्निर्ममतया देवकुलवनादिष्वऽवस्थानात् लोके वनवासीत्युक्तस्तस्माच्चतुर्थं नाम वनवासीति प्रादुर्भूतं ॥ ६ ॥

सत्तरस वुड्ढदेवो १७, सूरी पज्जोअणो अट्ठारसमो १८।
एगुणवीसइ इमो सुरी सिरिमाणदेवगुरू १९ ॥ ७ ॥

१७—तत्पट्टे श्रीवृद्धदेवसूरिः। १८—तत्पट्टे श्रीप्रद्योतनसूरिः। १९—तत्पट्टे श्रीमानदेवसूरिः।

व्याख्या—१७ सत्तरत्ति, श्रीसामंतभद्रसूरिपट्टे सप्तदशः श्रीवृद्धदेवसूरिः। वृद्धो देवसूरिरिति ख्यातः। श्रीवीरात् पंचनवत्यधिक ५९५ (६९५) वर्षातिक्रमे कोरंटके नाहडमंत्रिनिर्मापितप्रासादे प्रतिष्ठाकृत्।

श्रीजज्जगसूरिणा च ६७० सप्तत्यधिकषट्शतवर्षे सत्यपुरे नाहडनिर्मितप्रासादे श्रीमहावीरः प्रतिष्ठितः।

१८—सूरिपज्जोअणत्ति, श्रीवृद्धदेवसूरिपट्टेऽष्टादशः श्रीप्रद्योतनसूरिः।

१९—एगूणत्ति, श्रीप्रद्योतनसूरिपट्टे एकोनविंशतितमः श्रीमानदेवसूरिः। सूरिपदस्थापनाऽवसरे यत्स्कंधयोरुपरि सरस्वतीलक्ष्म्यौ साक्षाद् वीक्ष्य चरित्रादस्य भ्रंशो भावीति विचारणया विषण्णचित्तं गुरुं विज्ञाय येन भक्तकुलभिक्षाः सर्वाश्च विकृतयस्त्यक्ताः। तत्तपसा नड्डुलपुरे १ पद्मा, २ जया, ३ विजया, ४ अपराजिताऽभिधानाभिः देवीभिः पर्युपासमानं दृष्ट्वा कथं नारीभिः परिकरितोऽयं सूरिरिति शंकापरायणः कश्चित् मुग्धस्ताभिरेव शिक्षित इति ॥ ७ ॥

सिरिमाणतुंगसूरी २०, वीसइमो एगवीस सिरिवीरो २१ ।
बावीसो जयदेवो २२, देवाणंदो य तेवीसो २३ ॥ ८ ॥

२०–तत्पट्टे श्रीमानतुंगसूरिः । २१–तत्पट्टे श्रीवीरसूरिः । २२–तत्पट्टे श्रीजयदेवसूरिः । २३–तत्पट्टे श्रीदेवानंदसूरिः ।

**व्याख्या**—२० सिरिमाणतुंगत्ति, श्रीमानदेवसूरिपट्टे विंशतितमः **श्रीमानतुंगसूरिः** । येन भक्तामरस्तवनं कृत्वा बाण–मयूरपंडितविद्याचमत्कृतोऽपि क्षितिपतिः प्रतिबोधितः । भयहरस्तवनकरणेन च नागराजो वशीकृतः । भक्तिभरेत्यादि स्तवनानि च कृतानि । श्रीप्रभावकचरित्रे प्रथमं मानतुंगचरित्रमुक्तं, पश्चाच्च देवसूरिशिष्यश्रीप्रद्योतनसूरिशिष्यश्रीमानदेवसूरिप्रबंधा उक्ताः, परं तत्र नाऽऽशंका यतस्तत्राऽन्येऽपि प्रबंधा व्यस्ततयोक्ता दृश्यन्ते ।

२१ एगवीसत्ति, श्रीमानतुंगसूरिपट्टे एकविंशतितमः **श्रीदेवानंदसूरिः** । स च श्रीवीरात् सप्ततिसप्तशत ७७० वर्षे, विक्रमतः त्रिशती ३०० वर्षे नागपुरे श्रीनमिप्रतिष्ठाकृत् । यदुक्तम्–

नागपुरे नमिभवन–प्रतिष्ठया महितपाणिसौभाग्यः ।
अभवद् वीराचार्य–स्त्रिभिः शतैः साधिके राज्ञः ॥ १ ॥

२२ बावीसत्ति, श्रीवीरसूरिपट्टे द्वाविंशतितमः **श्रीजयदेवसूरिः** ॥ छ॥

२३ देवाणंदोत्ति, श्रीजयदेवसूरिपट्टे त्रयोविंशतितमः **श्रीदेवानंदसूरिः** । अत्रांतरे श्रीवीरात् पंचचत्वारिंशदधिकाष्टशत ८४५ वर्षातिक्रमे **वल्लभीभङ्गः** । द्व्यशीत्यधिकाष्टशत ८८२ वर्षातिक्रमे **चैत्यस्थितिः** । षडशीत्यधिकाष्टशत ८८६ वर्षातिक्रमे **ब्रह्मद्वीपिकाः** ॥ ८ ॥

चउवीसो सिरिविक्कम २४, नरसिंहो पंचवीस २५ छव्वीसो ।
सूरिसमुद्द २६ सत्ता–वीसो सिरिमाणदेवगुरू २७ ॥ ९ ॥

२४–तत्पट्टे श्रीविक्रमसूरिः । २५–तत्पट्टे श्रीनरसिंहसूरिः । २६–तत्पट्टे श्रीसमुद्रसूरिः । २७ तत्पट्टे श्रीमानदेवसूरिः ।

**व्याख्या**—२४ चउवीसोत्ति,–श्रीदेवानंदसूरिपट्टे चतुर्विंशतितमः **श्रीविक्रमसूरिः** ।

२५ नरसिंहोत्ति, श्रीविक्रमसूरिपट्टे पंचविंशतितमः **श्रीनरसिंहसूरिः** । यतः—

नरसिंहसूरिरासीदतोऽखिलग्रंथपारगो येन ।
यक्षो नरसिंहपुरे, मांसरतिं त्याजितः स्वगिरा ॥ १ ॥

२६ छव्वीसोत्ति, श्रीनरसिंहसूरिपट्टे षड्विंशतितमः **श्रीसमुद्रसूरिः** ।

खोमाणराजकुलजोऽपि समुद्रसूरि-र्गच्छं शशास किल यः प्रवणप्रमाणी ।
जित्वा तथा क्षपणकान् यशं वितेने, नागह्रदे भुजगनाथनमस्य तीर्थे ॥ १ ॥

२७ सत्तावीसोत्ति, श्रीसमुद्रसूरिपट्टे सप्तविंशतितमः श्रीमानदेवसूरिः ।

विद्यासमुद्रहरिभद्रमुनींद्रमित्रं, सूरिर्बभूव पुनरेव हि मानदेवः ।
मांद्यात्प्रपातमपि योऽनघसूरिमंत्रं, लेभेंऽबिकामुखगिरा तपसोज्जयंते ॥ १ ॥

श्रीवीरात् वर्षसहस्रे १००० गते सत्यमित्रे पूर्वव्यवच्छेदः ।

अत्र च श्रीनागहस्ती १, रेवतीमित्र २, ब्रह्मद्वीपो ३, नागार्जुनो ४, भूतदिन्नः ५, श्रीकालकसूरिश्चेति ६ षड्युगप्रधाना यथाक्रमं श्रीवज्रसेनसत्यमित्रयोरंतरालकालवर्तिनो बोध्याः । एषु च युगप्रधानशक्राभिवंदितप्रथमानुयोगसूत्रणासूत्रधारकल्पश्रीकालकाचार्यैः श्रीवीरात् त्रिनवत्यधिकनवशत ९९३ वर्षातिक्रमे पंचमीतश्चतुर्थ्यां पर्युषणापर्वाऽऽनीतमिति । श्रीवीरात् पंचपंचाशदधिकसहस्र १०५५ वर्षे, वि० पंचशीत्यधिकपंचशतवर्षे ५८५ याकिनीसूनुः श्रीहरिभद्रसूरिः स्वर्गभाक् । पंचदशाधिकैकादशशत १११५ वर्षे श्रीजिनभद्रगणिर्युगप्रधानः । अयं च जिनभद्रियध्यानशतकादेर्हरिभद्रसूरिभिर्वृत्तिकरणाद्भिन्न इति पट्टावल्यां, परं तस्य चतुरुत्तरशतवर्षायुष्कत्वेन श्रीहरिभद्रसूरिकालेऽपि संभवान्नाऽशंकावकाश इति ॥ ९ ॥

अट्ठावीसो विबुहो २८, एगुणतीसे गुरु जयाणंदो २९ ।
तीसो रविप्पहो ३० इग-तीसो जसदेवसूरिवरो ३१ ॥ १० ॥

२८-तत्पट्टे श्रीविबुधप्रभसूरिः । २९-तत्पट्टे श्रीजयानंदसूरिः । ३०-तत्पट्टे श्रीरविप्रभसूरिः । ३१-तत्पट्टे श्रीयशोदेवसूरिः ।

व्याख्या—२८ अट्ठावीसोत्ति, श्रीमानदेवसूरिपट्टेऽष्टाविंशतितमः श्रीविबुधप्रभसूरिः ।

२९ एगुणतीसोत्ति, श्रीविबुधप्रभसूरिपट्टे एकोनत्रिंशत्तमः श्रीजयानंदसूरिः ।

३० तीसो रवित्ति, श्रीजयानंदसूरिपट्टे त्रिंशत्तमः श्रीरविप्रभसूरिः । स च श्रीवीरात् सप्तत्यधिकैकादशशत ११७० वर्षे, वि० सप्तशतवर्षे ७०० नड्डुलपुरे श्रीनेमिनाथप्रासादप्रतिष्ठाकृत् । श्रीवी० नवत्यधिकैकादशशत ११९० वर्षे श्रीउमास्वातिर्युगप्रधानः ।

३१ इगतीसोत्ति, श्रीरविप्रभसूरिपट्टे एकत्रिंशत्तमः श्रीयशोदेवसूरिः । अत्र च श्रीवीरात् द्विसप्तत्यधिकद्वादशशतवर्षे १२७२, वि० द्व्युत्तराष्टशतवर्षे ८०२ अणहिल्लपुरपत्तनस्थापना वनराजेन कृता । श्रीवीर० सप्तत्यधिकद्वादशशतवर्षे १२७०, वि० अष्टशतवर्षे ८००

भाद्रशुक्लतृतीयायां बप्पभट्टेर्जन्म, येनामराजा प्रतिबोधितः। स च श्रीवी० पंचषष्ट्यधिकत्रयोदशशतवर्षे १३६५, वि० पंचनवत्यधिकाष्टशतवर्षे ८९५ भाद्रशुक्लषष्ठ्यां स्वर्गभाक् ॥१०॥

बत्तीसो पज्जुण्णो ३२, तेतीसो माणदेव जुगपवरो ३३।
चउतीस विमलचंदो ३४, पणतीसुज्जोअणो सूरी ३५ ॥ ११ ॥

३२–तत्पट्टे श्रीप्रद्युम्नसूरिः। ३३–तत्पट्टे श्रीमानदेवसूरिः। ३४–तत्पट्टे श्रीविमलचन्द्रसूरिः। ३५–तत्पट्टे श्रीउद्योतनसूरिः।

व्याख्या—३२ बत्तीसोत्ति, श्रीयशोदेवसूरिपट्टे द्वात्रिंशत्तमः श्रीप्रद्युम्नसूरिः।

३३ तेत्तीसोत्ति, श्रीप्रद्युम्नसूरिपट्टे त्रयस्त्रिंशत्तमः श्रीमानदेवसूरिः, उपधानवाच्यग्रंथविधाता।

३४ चउतीसत्ति, श्रीमानदेवसूरिपट्टे चतुस्त्रिंशत्तमः श्रीविमलचन्द्रसूरिः।

३५ पणतीसोत्ति, श्रीविमलचंद्रसूरिपट्टे पंचत्रिंशत्तमः श्रीउद्योतनसूरिः। स चार्बुदाचलयात्रार्थं पूर्वावनीतः समागतः। टेलिग्रामस्य सीम्नि पृथोर्वटस्य छायायामुपविष्टो निजपट्टोदयहेतुं भव्यमुहूर्त्तमवगम्य श्रीवीरात् चतुष्षष्ट्यधिकचतुर्दशशतवर्षे १४६४ वि० चतुर्नवत्यधिकनवशतवर्षे ९९४ निजपट्टे श्रीसर्वदेवसूरिप्रभृतीनष्टौ सूरीन् स्थापितवान्। केचित्तु सर्वदेवसूरिमेकमेवेति वदंति। वटस्याऽधः सूरिपदकरणात् वटगच्छ इति पंचमनाम लोकप्रसिद्धं। प्रधानशिष्यसंतत्या ज्ञानादिगुणैः प्रधानचरित्रैश्च बृहत्वाद्बृहद्गच्छ इत्यपि ॥ ११ ॥

सिरिसव्वदेवसूरी छत्तीसो ३६, देवसूरि सगतीसो ३७।
अडतीसइमो सूरि पुणोवि, सिरिसव्वदेवगुरु ३८ ॥ १२ ॥

३६–तत्पट्टे श्रीसर्वदेवसूरिः। ३७–तत्पट्टे श्रीदेवसूरिः। ३८–तत्पट्टे श्रीसर्वदेवसूरिः।

व्याख्या–३६ सिरिसव्वत्ति, श्रीउद्योतनसूरिपट्टे षट्त्रिंशत्तमः श्रीसर्वदेवसूरिः। केचित् श्रीप्रद्युम्नसूरिमुपधानग्रंथप्रणेतृश्रीमानदेवसूरिं च पट्टधरतया न मन्यन्ते तदभिप्रायेण चतुस्त्रिंशत्तम इति। स च गौतमवत् सुशिष्यलब्धिमान्। वि० दशाधिकदशशतवर्षे १०१० रामसैन्यपुरे श्रीचंद्रप्रभप्रतिष्ठाकृत्। चंद्रावत्यां निर्मापितोत्तुंगप्रासादं कुंकुणमंत्रिणं स्वगिरा प्रतिबोध्य प्राव्राजयत्। यदुक्तं—

चरित्रशुद्धिं विधिवज्जिनागमा–द्विधाय भव्यानभितः प्रबोधयन्।
चकार जैनेश्वरशासनोन्नतिं यः, शिष्यलब्ध्याभिनवो नु गौतमः ॥ १ ॥

नृपाद्दशाग्रे शरदां सहस्रे १०१०, यो रामसैन्याह्वपुरे चकार।
नाभेयचैत्येऽष्टमतीर्थराज–बिंबप्रतिष्ठां विधिवत् सदर्च्यः ॥ २ ॥

चंद्रावतीभूपतिनेत्रकल्पं, श्रीकुंकुणं मंत्रिणमुच्चऋद्धिं ।
निर्मापितोत्तुंगविशालचैत्यं, योऽदीक्षयत् बुद्धगिरा प्रबोध्य ॥ ३ ॥

तथा वि० एकोनत्रिंशदधिकदशशत १०२९ वर्षे धनपालेन देशीनाममाला कृता । वि० पण्णवत्यधिकसहस्र १०९६ वर्षे श्रीउत्तराध्ययनटीकाकृत् थिरापद्रगच्छीयवादिवेताल-श्रीशांतिसूरिः स्वर्गभाक् ॥

३७ देवसूरित्ति, श्रीसर्वदेवसूरिपट्टे सप्तत्रिंशत्तमः श्रीदेवसूरिः । रूपश्रीरिति भूपप्रदत्त-विरुदधारी ॥

३८ अडतीसइमोत्ति, श्रीदेवसूरिपट्टेऽष्टत्रिंशत्तमः पुनः श्रीसर्वदेवसूरिः, यो यशोभद्र-नेमिचंद्रादीनष्टौ सूरीन् कृतवान् ॥ छ ॥ १२ ॥

एगुणचालीसइमो, जसभद्दो नेमिचंदगुरुबंधू ३९ ।
चालीसो मुणिचंदो ४०, एगुआलीसो अजिअदेवो ४१ ॥ १३ ॥

३९–तत्पट्टे श्रीयशोभद्रसूरि–श्रीनेमिचंद्रसूरी । ४०–तत्पट्टे श्रीमुनिचंद्रसूरिः । ४१–तत्पट्टे श्रीअजितदेवसूरिः ।

व्याख्या—३९ एगुणत्ति, श्रीसर्वदेवसूरिपट्टे एकोनचत्वारिंशत्तमौ श्रीयशोभद्र–नेमिचंद्रौ द्वौ सूरी गुरुभ्रातरौ । वि० पंचत्रिंशदधिकैकादशशत ११३५ वर्षे, केचित् एकोनचत्वारिंशदधिकैकादशशत ११३९ वर्षे नवांगवृत्तिकृत्श्रीअभयदेवसूरिः स्वर्गभाक् । तथा कूर्चपुरगच्छीय चैत्यवासीजिनेश्वरसूरिशिष्यो जिनवल्लभश्चित्रकूटे पट्कल्याणकप्ररूपणया निजमतं प्ररूपितवान् ।

४० चालीसोत्ति, श्रीयशोभद्रसूरि–श्रीनेमिचंद्रसूरिपट्टे चत्वारिंशत्तमः श्रीमुनिचंद्रसूरिः । स भगवान् यावज्जीवमेकसौवीरपायी, प्रत्याख्यातसर्वविकृतिकः । श्रीहरिभद्रसूरिकृताऽनेकांतपताकाद्यनेकग्रंथपञ्जिकोपदेशपदवृत्त्यादिविधानेन तार्किकशिरोमणितया ख्यातिभाक् । यदुक्तम्—

सौवीरपायीति तदेकवारि–पानाद्विधिज्ञो विरुदं बभार ।
जिनागमांभोनिधिधौतबुद्धिर्यः शुद्धचारित्रिषु लब्धरेखः ॥ १ ॥
संविग्नमौलिर्विकृतीश्च सर्वा–स्तत्याज देहेऽप्यममः सदा यः ।
विद्वद्विनेयाभिवृतः प्रभाव–प्रभागुणौघैः किल गौतमाभः ॥ २ ॥
हरिभद्रसूरिरचिताः, श्रीमदनेकांतजयपताकाद्याः ।
ग्रंथनगा विबुधानामप्यधुना दुर्गमा येऽत्र ॥ ३ ॥

सत्पञ्जिकादिपद्या—विरचना या भगवता कृता येन ।
मंदधियामपि सुगमास्ते सर्व्वे विश्वहितबुध्या ॥ ४ ॥

अष्टहयेश ( ११७८ ) मिताब्दे विक्रमकालाद्दिवं गतो भगवान् ।
श्रीमुनिचंद्रमुनींद्रो, ददातु भद्राणि संघाय ॥ ५ ॥

अनेन चानंदसूरिप्रभृतयोऽनेके निजबांधवाः प्रव्राज्य सूरीकृताः ।

अयं च श्रीमुनिचंद्रसूरिः श्रीनेमिचंद्रसूरिगुरुभ्रातृश्रीविनयचंद्रोपाध्यायस्य शिष्यः श्रीनेमिचंद्रसूरिभिरेव गणनायकतया स्थापितः । यदुक्तं—

गुरुबंधुविनयचंद्राध्यापकशिष्यं स नेमिचंद्रगुरुः । यं गणनाथमकार्षीत्, स जयति मुनिचंद्रसूरिरिति ॥ १ ॥

अत्र च एकोनषष्ट्यधिकैकादशशत ११५९ वर्षे **पौर्णिमीयकमतोत्पत्तिः**, तत्प्रतिबोधाय च मुनिचंद्रसूरिभिः पाक्षिकसप्ततिका कृतेति ।

तथा श्रीमुनिचंद्रसूरिशिष्याः श्रीअजितदेवसूरि—वादिश्रीदेवसूरिप्रभृतयः । तत्र वादिश्रीदेवसूरिभिः श्रीमदणहिल्लपुरपत्तने जयसिंहदेवराजस्याऽनेकविद्वज्जनकलितायां सभायां चतुरशीतिवादलब्धजययशसं दिगंबरचक्रवर्तिनं वादलिप्सुं कुमुदचंद्राचार्यं वादे निर्जित्य श्रीपत्तने दिगंबरप्रवेशो निवारितोऽद्यापि प्रतीतः । तथा वि० चतुरधिकद्वादशशत १२०४ वर्षे फलवर्धिग्रामे चैत्यबिंबयोः प्रतिष्ठा कृता । तत्तीर्थं तु संप्रत्यपि प्रसिद्धं । तथा आरासणे च नेमिनाथप्रतिष्ठा कृता । चतुरशीतिसहस्र ८४००० प्रमाणः **स्याद्वादरत्नाकरनामा** प्रमाणग्रंथः कृतः । येभ्यश्च यन्नाम्नैव ख्यातिमत् चतुर्विंशतिसूरिशाखं बभूव । एषां च वि० चतुर्स्त्रिंशदधिके एकादशशत ११३४ वर्षे जन्म, द्विपंचाशदधिके ११५२ दीक्षा, चतुःसप्तत्यधिके ११७४ सूरिपदं, षड्विंशत्यधिकद्वादशशत १२२६ वर्षे श्रावणवदिसप्तम्यां ७ गुरौ स्वर्गः ।

तत्समये श्रीदेवचंद्रसूरिशिष्यस्त्रिकोटिग्रंथकर्ता कलिकालसर्वज्ञख्यातिमान् **श्रीहेमचंद्रसूरिः**, तस्य वि० पंचचत्वारिंशदधिके एकादशशत ११४५ वर्षे कार्तिकशुदिपूर्णिमायां १५ जन्म, पंचाशदधिके ११५० व्रतं, षट्षष्ठ्यधिके ११६६ सूरिपदं, एकोनत्रिंशदधिकद्वादशशत १२२९ वर्षे स्वर्गः ॥

४१ एगुआलीसोत्ति, श्रीमुनिचंद्रसूरिपट्टे एकचत्वारिंशत्तमः श्रीअजितदेवसूरिः । तत्समये वि० चतुरधिकद्वादशशत १२०४ वर्षे **खरतरोत्पत्तिः** । तथा वि० त्रयोदशाधिके द्वादशशत १२१३ वर्षे **आंचलिकमतोत्पत्तिः** । वि० षट्त्रिंशदधिके १२३६ वर्षे **सार्धपौर्णिमीयकोत्पत्तिः** । वि०

पंचाशदधिके १२९० आगमिकमतोत्पत्तिः । श्रीवीरात् द्विनवत्यधिकषोडशशत १६९२ वर्षे पाहडोद्धारः ॥ छ ॥ १३ ॥

वायालु विजयसीहो ४२, तेआला हुंति एगगुरुभाया ।
सोमप्पह-मणिरयणा ४३, चउआलीसो अ जगचंदो ४४ ॥ १४ ॥

४२-तत्पट्टे श्रीविजयसिंहसूरिः । ४३-तत्पट्टे श्रीसोमप्रभसूरिः श्रीमणिरत्नसूरिश्च । ४४-तत्पट्टे श्रीजगचन्द्रसूरिः ।

व्याख्या—४२ वायालुत्ति, श्रीअजितदेवसूरिपट्टे द्विचत्वारिंशत्तमः श्रीविजयसिंहसूरिः, विवेकमंजरीशुद्धिकृत् ।

यस्य प्रथमः शिष्यः, शतार्थितया विख्यातः । श्रीसोमप्रभसूरिः द्वितीयस्तु मणिरत्नसूरिः ॥ १ ॥

४३ तेआलत्ति, श्रीविजयसिंहसूरिपट्टे त्रयश्चत्वारिंशत्तमौ श्रीसोमप्रभसूरि-श्रीमणिरत्नसूरी ॥

४४ चउआलीसोत्ति-श्रीसोमप्रभ-श्रीमणिरत्नसूरिपट्टे चतुश्चत्वारिंशत्तमः श्रीजगचंद्रसूरिः ॥

यः क्रियाशिथिलमुनिसमुदायं ज्ञात्वा गुर्वाज्ञया वैराग्यरसैकसमुद्रं चैत्रगच्छीयश्रीदेवभद्रोपाध्यायं सहायमादाय क्रियायामौग्र्यात् हीरलाजगचंद्रसूरिरितिख्यातिभाक् वभूव । केचित्तु आघाटपुरे द्वात्रिंशता दिगंबराचार्यैः सह विवादं कुर्वन् हीरकवदभेद्यो जात इति राज्ञा हीरलाजगचंद्रसूरिरिति भणित इत्याहुः ॥ तथा यावज्जीवमाचाम्लतपोऽभिग्रहीतद्वादशवर्षैस्तपाविरुदमाप्तवान् ॥ ततः षष्ठं नाम वि० पंचाशीत्यधिकद्वादशशत १२८५ वर्षे तपा इति प्रसिद्धं ॥

तथा च १ निर्ग्रंथ, २ कौटिक, ३ चन्द्र, ४ वनवासि, ५ वटगच्छेत्यपरनामकबृहद्गच्छ, ६ तपा-इति षण्णां नाम्नां प्रवृत्तिहेतव आचार्याः क्रमेण १ श्रीसुधर्मास्वामि, २ श्रीसुस्थित, ३ श्रीचंद्र, ४ श्रीसामंतभद्र, ५ श्रीसर्वदेव, ६ श्रीजगच्चंद्रनामानः षट् सूरयः ॥छ॥ १४ ॥

देविंदो पणयालो ४५, छायालीसो अ धम्मघोसगुरू ४६ ।
सोमप्पह सगचत्तो ४७, अडचत्तो सोमतिलगगुरू ४८ ॥ १५ ॥

४५-तत्पट्टे श्रीदेवेन्द्रसूरिः । ४६-तत्पट्टे श्रीधर्मघोषसूरिः । ४७-तत्पट्टे श्रीसोमप्रभसूरिः । ४८-तत्पट्टे श्रीसोमतिलकसूरिः ।

व्याख्या—४५ देविंदोत्ति, श्रीजगचंद्रसूरिपट्टे पंचचत्वारिंशत्तमः श्रीदेवेन्द्रसूरिः । स च मालवके उज्जयिन्यां जिनभद्रनाम्नो महेभ्यस्य वीरधवलनाम्नस्तत्सुतस्य पाणिग्रहणनिमित्तं

महोत्सवे जायमाने वीरधवलकुमारं प्रतिबोध्य, वि० द्व्युत्तरत्रयोदशशतं १३०२ वर्षे प्राव्राजयत् ॥ तदनु तद्भ्रातरमपि प्रव्राज्य चिरकालं मालवके एव विहृतवान् । ततो गूर्ज्जरधरित्र्यां श्रीदेवेन्द्रसूरयः श्रीस्तंभतीर्थे समायाताः ॥

तत्र पूर्वं श्रीविजयचन्द्रसूरयः १–गीतार्थानां पृथक् पृथक् वस्त्रपुट्टलिकादानं, २–नित्यविकृत्यनुज्ञा, ३–चीवरक्षालनानुज्ञा, ४–फलशाकग्रहणं, ५–साधु–साध्वीनां निर्विकृतिकप्रत्याख्याने निर्विकृतिकग्रहणं, ६–आर्यिकासमानीताऽशनादिभोगानुज्ञा, ७–प्रत्यहं द्विविधप्रत्याख्यानं, ८–गृहस्थावर्जननिमित्तं प्रतिक्रमणकरणानुज्ञा, ९–संविभागदिने तद्गृहे गीतार्थेन गंतव्यं, १०–लेपसंनिध्यभावः, ११–तत्कालेनोष्णोदकग्रहणं इत्यादिना क्रियाशैथिल्यरुचीन् कतिचिन् मुनीन् स्वायत्तीकृत्य सदोषत्वात् श्रीजगच्चंद्रसूरिभिः परित्यक्तायामपि विशालायां पौषधशालायां लोकाग्रहात् द्वादशवर्षाणि स्थितवंतः । प्रव्रज्यादिककृत्यम् गुर्वाज्ञामंतरेणैव कृतवंतश्च ।

श्रीविजयचंद्रसूरिव्यतिकरस्त्वेवं—

मंत्रिवस्तुपालगृहे विजयचंद्राख्यो लेख्यकर्मकृत् मंत्र्याऽऽसीत् । क्वचनाऽपराधे कारागारे प्रक्षिप्तः । श्रीदेवभद्रोपाध्यायैः प्रव्रज्याग्रहणप्रतिज्ञया विमोच्य प्रव्राजितः । स च सप्रज्ञो बहुश्रुतीभूतो मंत्रिवस्तुपालेन नाऽयं साभिमानी सूरिपदयोग्य इत्येवं वार्यमाणैरपि श्रीजगच्चंद्रसूरिभिः श्रीदेवभद्रोपाध्यायानुरोधात् श्रीदेवेन्द्रसूरीणां सहायो भविष्यतीति विचिंत्य च सूरीकृतः । बहुकालं च श्रीदेवेन्द्रसूरिषु विनयवानेवासीत् ।

मालवदेशात्समागतानां श्रीदेवेन्द्रसूरीणां तदा वंदनार्थमपि नाऽऽयातः गुरुभिर्ज्ञापितं कथमेकस्यां वसतौ द्वादशवर्षाणि स्थितिमिति श्रुत्वा "निर्म्मम–निरहंकारा" इत्यादि प्रत्युत्तरं प्रेषितवान् ॥ संविज्ञास्तु न तं प्रत्याश्रिताः । श्रीदेवेन्द्रसूरयस्तु पूर्वमनेकसंविज्ञसाधुपरिकरिता "उपाश्रय" एव स्थितवंतः॥ लोकैश्च वृद्धशालायां स्थितत्वात् श्रीविजयचंद्रसमुदायस्य "वृद्धशालिक" इत्युक्तं । तद्वशात् श्रीदेवेन्द्रसूरिनिश्रितसमुदायस्य "लघुशालिक" इति ख्यातिः ।

स्तंभतीर्थे च चतुष्पथस्थितकुमारपालविहारे धर्मदेशनायामष्टादशशत १८०० मुखवस्त्रिकाभिर्मंत्रिवस्तुपालः चतुर्वेदादिनिर्णयदातृत्वेन स्वसमयपरसमयविदां श्रीदेवेन्द्रसूरीणां वन्दनकदानेन बहुमानं चकार । श्रीगुरवस्तु विजयचंद्रमुपेक्ष्य विहरमाणाः क्रमेण पाल्हणपुरे समायाताः । तत्र चानेकजनतान्विताः शीकरीयुक्तसुखासनगामिनश्चतुरशीतिरिभ्या धर्मश्रोतारः । प्रल्हादनविहारे प्रत्यहं मूढकप्रमाणा अक्षताः, क्रयविक्रयादौ नियतांशग्रहणात् षोडशमणप्रमाणानि पूगीफलानि चायान्ति । प्रत्यहं पंचशतीवीशलप्रियाणां भोगः । एवं व्यतिकरे सति श्रीसंघेन विज्ञप्ता गुरवः यदत्र गणाधिपतिस्थापनेन पूर्यतामस्मन्मनोरथः । गुरुभिस्तु तथाविधमौचित्यं विचार्य प्रल्हादन-

विहारे वि० त्रयोविंशत्यधिके त्रयोदशशते १३२३ वर्षे, क्वचिच्चतुरधिके १३०४ श्रीविद्यानंदसूरिनाम्ना वीरधवलस्य सूरिपददानं। तदनुजस्य च भीमसिंहस्य धर्मकीर्तिनाम्नोपाध्यायपदमपि तदानीमेव संभाव्यते। सूरिपददानावसरे सौवर्णकपिशीर्षके प्रल्हादनविहारे मंडपात् कुंकुमवृष्टिः। सर्वोऽपि जनो महाविस्मयं प्राप्तः, श्राद्धैश्च महानुत्सवश्चक्रे। तैश्च श्रीविद्यानंदसूरिभिर्विद्यानंदाभिधं व्याकरणं कृतं। यदुक्तम्—

विद्यानंदाभिधं येन, कृतं व्याकरणं नवम्।
भाति सर्वोत्तमं स्वल्प–सूत्रं बह्वर्थसंग्रहं ॥ १ ॥

पश्चात् श्रीविद्यानंदसूरीन् धरित्र्यामाऽऽज्ञाप्य, पुनरपि श्रीगुरवो मालवके विहृतवंतः। तत्कृताश्च ग्रंथास्त्वेते—

२–श्राद्धदिनकृत्यसूत्र–वृत्ती, २-नव्यकर्मग्रंथपंचकसूत्र–वृत्ती, २-सिद्धपंचाशिकासूत्र-वृत्ती, १–धर्मरत्नवृत्तिः, २–(१) सुदर्शनचरित्रं, ३ त्रीणि भाष्यानि, " सिरिउसहवद्धमाण " प्रमृतिस्तवादयश्च। केचित्तु श्रावकदिनकृत्यसूत्रमित्याहुः ॥ विक्रमात् सप्तविंशत्यधिकत्रयोदशशत-१३२७ वर्षे मालवक एव देवेन्द्रसूरयः स्वर्गं जग्मुः ॥

दैवयोगात् विद्यापुरे श्रीविद्यानंदसूरयोऽपि त्रयोदशदिनांतरिताः स्वर्गभाजः। अतः षड्भिर्मासैः सगोत्रसूरिणा श्रीविद्यानंदसूरिबांधवानां श्रीधर्मकीर्त्युपाध्यायानां श्रीधर्मघोषसूरिरितिनाम्ना सूरिपदं दत्तं ॥

श्रीगुरुभ्यो विजयचंद्रसूरिपृथग्भवने कं गुरुं सेवेऽहमिति संशयानस्य सौवर्णिकसंग्रामपूर्वजस्य निशि स्वप्ने देवतया श्रीदेवेन्द्रसूरीणामन्वयो भव्यो भविष्यतीति तमेव सेवस्वेति ज्ञापितं ॥

श्रीगुरूणां स्वर्गगमनं श्रुत्वा संघाधिपतिना **भीमेन** द्वादशवर्षाणि धान्यं त्यक्तं ॥ छ ॥

४६ छायालीसोत्ति, श्रीदेवेन्द्रसूरिपट्टे षट्चत्वारिंशत्तमः श्रीधर्मघोषसूरिः। येन मंडपाचले सा० पृथ्वीधरः पंचमव्रते लक्षप्रमाणं परिग्रहं नियमयन् ज्ञानातिशयात्तद्भंगमवगम्य प्रतिबोधितः। स च मंडपाचलाधिपस्य सर्वलोकाभिमतं प्राधान्यं प्राप्तः, ततो धनेन धनदोपमः जातः। पश्चात्तेन चतुरशीति(८४)जिनप्रासादाः सप्त च ज्ञानकोशाः कारिताः। श्रीशत्रुंजये च एकविंशतिघटीप्रमाणसुवर्णव्ययेन रैमयः श्रीऋषभदेवप्रासादः कारितः। केचिच्च तत्र षट्पंचाशत्सुवर्णघटीव्ययेनेंद्रमालायां ( लां यो ) परिहितवानिति वदन्ति।

तथा धरित्र्यां केनचित्साधर्मिकेण ब्रह्मचारिवेषदानावसरे महर्धिकत्वात् पृथ्वीधरस्यापि तद्वेषः प्राभृतीकृतः, स च तमेव वेषमादाय ततःप्रभृति द्वात्रिंशद्वर्षीयोऽपि ३२ ब्रह्मचार्यभूत् ॥

तस्य च पुत्र सा० झांझणनाम्ना एक एवाऽऽसीत् । येन श्रीशत्रुंजयोज्जयंतगिर्योः शिखरे द्वादशयोजनप्रमाणः सुवर्णरूप्यमय एक एव ध्वजः समारोपितः । कर्प्पूरकृते राजासारंगदेवः करयोजनं कारितः ।

येन च मंडपाचले जीर्णटंकानां द्विसप्तत्या क्वचित् षट्त्रिंशता सहस्रैर्गुरूणां प्रवेशोत्सवश्चक्रे ।

देवपत्तने च शिष्याभ्यर्थनया मंत्रमयस्तुतिविधानतो येषां रत्नाकरस्तरंगैः रत्नढौकनं चकार । तथा तत्रैव ये स्वध्यानप्रभावात्प्रत्यक्षीभूतनवीनोत्पन्नकपर्दियक्षेण वज्रस्वामिमहात्म्याच्छत्रुंजयान्निष्काशितं जीर्णकपर्दिराजं मिथ्यात्वमुत्सर्प्पयंतं प्रतिबोध्य श्रीजिनबिंबाधिष्टायकं व्यधुरिति । एकदा काभिश्चिद् दुष्टस्त्रीभिः साधूनां विहारिता कार्मणोपेता वटका भूपीठे यैस्त्याजिताः संतः प्रभाते पाषाणा अभवन् । तदनु चाभिमंत्र्याऽर्पितपट्टकासनास्ताः स्तंभिताः सत्यः कृपया मुक्ता इति । तथा विद्यापुरे पक्षांतरीयतथाविधस्त्रीभिर्गुरूणां व्याख्यानरसे मात्सर्यात् स्वरभंगाय कण्ठे केशगुच्छके कृते यैर्विज्ञातस्वरूपास्ताः प्राग्वत् स्तंभिताः संत्योऽतःपरं भवद्गणे न वयमुपद्रोष्याम इति वाग्दानपुरःसरं संघाग्रहान्मुक्ता इति ।

उज्जयिन्यां च योगिभयात् साध्वस्थिते गुरव आगता योगिना साधवः प्रोक्ताः "अत्रागतैः स्थिरैः स्थेयं ?" साधुभिरुक्तं "स्थिताः स्मः किं करिष्यसि ?" तेन साधूनां दन्ता दर्शिताः, साधुभिस्तु कफोणिर्दर्शिता । साधुभिर्गत्वा गुरूणां विज्ञप्तं । तेन शालायामुन्दरवृन्दं विकुर्वितं । साधवो भीता गुरुभिर्घटमुखं वस्त्रेणाऽऽछाद्य तथा जप्तं यथा राटिं कुर्वन् स योगी आगत्य पादयोर्लग्नः ॥

कचनपुरे निश्यभिमंत्रितद्वारदानं, एकदा अनभिमंत्रितद्वारदाने शाकिनीभिः पट्टरूपाटिता स्तंभितास्ता वाग्दाने च मुक्ताः ।

यैरेकदा सर्पदंशे रात्रौ विषेणांतरांतरामूर्छामुपगतैरुपायविधुरं संघं प्रत्यूचे "प्राचीनप्रतोल्यां कस्यचित्पुंसो मस्तके काष्टभारिकामध्ये विषापहारिणी लता समेष्यति, सा च घृष्य दंशे देया" इत्येवं प्रोक्ते संघेन च तथा विहिते तया प्रगुणीभूय ततःप्रभृति यावज्जीवं षडपि विकृतयस्त्यक्ता, आहारस्तु तेषां सदा युगंधर्या एव ।

तत्कृता ग्रंथास्त्वेवं- संघाचारभाष्यवृत्तिः, सुअधम्मेतिस्तवः, कायस्थितिभवस्थितिस्तवौ, चतुर्विंशतिजिनस्तवाः स्वस्ताशर्मेत्यादिस्तोत्रं, देवेंद्रैरनिशं० इति श्लेषस्तोत्रं, यूयं यूवां त्वमिति श्लेषस्तुतयः, जय वृषभेत्यादिस्तुत्याद्याः ।

तत्र जय वृषमेत्यादिस्तुतिकरणव्यतिकरस्त्वेवं-एकेन मंत्रिणाऽष्टयमकं काव्यमुक्त्वा प्रोचे-' ईदृग्काव्यमधुना केनाऽपि कर्तुं न शक्यं। ' गुरुभिरूचे-नास्तिर्नास्ति । तेनोक्तं तं कविं दर्शयत। तैरुक्तं ज्ञास्यते। ततो जय वृषभस्तुतयो अष्टयमका एकया निशा निष्पाद्य भित्तिलिखिता दर्शिताः। स च चमत्कृतः प्रतिबोधितश्च । ते च वि० सप्तपंचाशदधिकत्रयोदशशत १३५७ वर्षे दिवं गताः।

४७ सोमप्पहत्ति, श्रीधर्मघोषसूरिपट्टे सप्तचत्वारिंशत्तमः श्रीसोमप्रभसूरिः। 'नमिऊण भणइ' एवमित्याद्याराधनासूत्रकृत्। तस्य च वि० दशाधिकत्रयोदशशत १३१० वर्षे जन्म, एकविंशत्यधिके १३२१ व्रतं, द्वात्रिंशदधिके १३३२ सूरिपदं, कण्ठगतैकादशांगसूत्रार्थो गुरुभिर्दीयमानायां मंत्रपुस्तिकायां यच्छ्रुतचारित्रं मंत्रपुस्तिकां वेत्युक्त्वा न मंत्रपुस्तिकां गृहीतवान्। अपरस्य योग्यस्याऽभावात् सा जलसात्कृता।

येन श्रीसोमप्रभसूरिणा जलकुंकुणदेशेऽप्कायविराधनाभयात् मरौ शुद्धजलदौर्लभ्यात् साधूनां विहारः प्रतिषिद्धः॥

तथा भीमपल्यां कार्तिके द्वये प्रथम एव कार्तिके एकादशाऽन्यपक्षीयाऽऽचार्योऽविज्ञातैं भाविनं भंगं विज्ञाय चतुर्मासीं प्रतिक्रम्य विहृतवन्तः, पश्चात्तद्भंगोऽभवत्। ते चाऽऽचार्या अकृतगुरुवचना भंगमध्येऽपतन्निति।

तत्कृता ग्रंथास्तु-सविस्तरयतिजीतकल्पसूत्रं, यत्राखिलेत्यादिस्तुतयः, जिनेन येनेति-स्तुतयः, श्रीमद्धर्मेत्यादयश्च॥

तच्छिष्याः-१ श्रीविमलप्रभसूरि २ श्रीपरमानंदसूरि ३ श्रीपद्मतिलकसूरि ४ श्रीसोमतिलकसूरय इति।

यस्मिन् वर्षे श्रीधर्मघोषसूरयो दिवं गताः तस्मिन्नेव वर्षे १३५७ श्रीसोमप्रभसूरिभिः श्रीविमलप्रभसूरीणां पदं ददे। ते च स्तोकं जीविता। ततः स्वायुर्ज्ञात्वा त्रिसप्तत्यधिकत्रयोदशशत १३७३ वर्षे श्रीपरमानंदसूरि-श्रीसोमतिलकसूरीणां सूरिपदं दत्त्वा, मासत्रयेण वि० त्रिसप्तत्यधिकत्रयोदशशत १३७३ वर्षे श्रीसोमप्रभसूरयो दिवं गताः। तदानीं च स्तंभतीर्थे तैपामाऽऽलिगवसतिस्थत्वेन तत्रत्याः प्रत्यासन्ना लोका आकाशोद्योतायालोक्योक्तवंतो यदेतेषां गुरूणां स्वर्गाद् विमानमागादिति। अन्यत्र च क्वापि पुरे तद्दिने यात्रावतीर्णदेवतयेत्युक्तं " यत्तपाचार्याः सौधर्मेन्द्रसामानिकत्वेन समुत्पन्ना " इति प्रवादोऽधुना मया मेरौ देवमुखात् श्रुत इति।

श्रीपरमानंदसूरिरपि वर्षचतुष्टयं जीवितः ॥ छ ॥

४८–अडचत्तोति, श्रीसोमप्रभसूरिपट्टेऽष्टचत्वारिंशत्तमः श्रीसोमतिलकसूरिः । तस्य वि० पंचपंचाशदधिके त्रयोदशशत १३५५ वर्षे माघे जन्म, एकोनसप्तत्यधिके १३६९ दीक्षा, त्रिसप्तत्यधिके १३७३ सूरिपदं, चतुर्विंशत्यधिकचतुर्दशशते १४२४ वर्षे स्वर्गः, सर्वायुरेकोनसप्तति ६९ वर्षाणां ॥

तत्कृता ग्रंथाः—बृहन्नव्यक्षेत्रसमाससूत्रं, सत्तरिसयठाणं, यत्राखिल० जय वृषभ० स्वस्ताशर्म० प्रमुखस्तववृत्तयः श्रीतीर्थराजः० चतुरर्थास्तुतिस्तद्वृत्तिः, शुभभावानव० श्रीमद्वीरं स्तुवे इत्यादि कमलबन्धस्तवः शिवशिरसि० श्रीनाभिसंभव० श्रीशैवेय० इत्यादीनि बहूनि स्तवनानि च ॥

श्रीसोमतिलकसूरिभिस्तु क्रमेण १ श्रीपद्मतिलकसूरि २ श्रीचंद्रशेखरसूरि ३ श्रीजयानन्दसूरि ४ श्री देवसुन्दरसूरीणां सूरिपदं दत्तं ॥

तेषु श्रीपद्मतिलकसूरयः श्रीसोमतिलकसूरिभ्यः पर्यायज्येष्ठा एकं वर्षं जीविताः, परं समित्यादिषु परमयतनापरायणाः ॥

श्रीचंद्रशेखरसूरेः वि० त्रिसप्तत्यधिके त्रयोदशशत १३७३ वर्षे जन्म, पंचाशीत्यधिके १३८५ व्रतं, त्रिनवत्यधिके १३९३ सूरिपदं, त्रयोविंशत्यधिकचतुर्दशशते १४२३ वर्षे स्वर्गः। तत्कृतानि–उषितभोजनकथा, यवराजर्षिकथा, श्रीमद्स्तंभनकहारबंधस्तवनानि। यदभिमंत्रितरजसाप्युपद्रवं कुर्वाणा गृहहरिकादुर्द्धरमृगराजश्च नेशुरिति ।

श्रीजयानंदसूरेः वि० अशीत्यधिके त्रयोदशशत १३८० वर्षे जन्म, द्विनवत्यधिके १३९२ आषाढशुक्लसप्तमी ७ शुक्रे धरायां व्रतं, साजणाख्यो वृद्धभ्राता प्रव्रज्याऽऽदेशदानाऽनभिमुखो देवतया प्रतिबोधितो दीक्षादेशमनुमेने, विंशत्यधिके चतुर्दशशत १४२० वर्षे चै० शु० दशम्यां १० अणहिल्लपत्तने सूरिपदं, एकचत्वारिंशदधिके १४४१ स्वर्गः। तत्कृतग्रंथाः–श्रीस्थूलभद्रचरितं, देवाः प्रभोऽयं० प्रभृतिस्तवनानि ॥ १५ ॥

**एगुणवण्णो सिरिदेव–सुंदरो ४९ सोमसुंदरो पण्णो ५० ।**
**मुनिसुंदरेगवण्णो ५१, बावण्णो रयणसेहरओ ५२ ॥ १६ ॥**

**४९–तत्पट्टे श्रीदेवसुंदरसूरिः । ५०–तत्पट्टे श्रीसोमसुंदरसूरिः । ५१–तत्पट्टे श्रीमुनिसुंदरसूरिः । ५२–तत्पट्टे श्रीरत्नशेखरसूरिः ।**

व्याख्या—४९ एगुणवण्णोत्ति, श्रीसोमतिलकसूरिपट्टे एकोनपंचाशत्तमः श्रीदेवसुन्दरसूरिः। तस्य वि० षण्णवत्यधिके त्रयोदशशत १३९६ वर्षे जन्म, चतुर्वर्षाधिके चतुर्दशशत १४०४ वर्षे व्रतं

महेश्वरग्रामे, विंशत्यधिके १४२० अणहिल्लपत्तने सूरिपदं। यं पत्तने गुंगडीसरःकृतस्थितिः प्रधानतरयोगिशतत्रयपरिवृत्तो मंत्रतंत्रादिसमृद्धिमंदिरं स्थावरजंगमविषापहारी जलानलव्यालहरिभय-भेत्ता अतीतानागतादिवस्तुवेत्ता राजमंत्रिप्रमुखबहुजनबहुमानपूजितः उदयीपा योगी प्रजासमक्षं स्तुतिं कुर्वाणः प्रकटितपरमभक्तिडंबरः साडंबरं वंदितवान्। तदनु च संघाधिपनरिआद्यैर्वंदनकारणं पृष्टः स योगी उवाच–" पद्माऽक्षदंडपरिकरचिह्नरुपलक्ष्ययुगोत्तमगुरवस्त्वया वंदनीया " इति दिव्यज्ञानशक्तिमतः कणयरीपाऽभिधानस्वगुरोर्वचसा वंदित " इति।

श्रीदेवसुन्दरसूरीणां च श्रीज्ञानसागरसूरयः, श्रीकुलमंडनसूरयः, श्रीगुणरत्नसूरयः, श्रीसोमसुंदरसूरयः, श्रीसाधुरत्नसूरयश्चेति पंचशिष्यास्तत्र श्रीज्ञानसागरसूरीणां वि० पंचाधिके चतुर्दशशत १४०५ वर्षे जन्म, सप्तदशाधिके १४१७ दीक्षा, एकचत्वारिंशदधिके १४४१ सूरिपदं, षष्टयधिके १४६० स्वर्गः। स च चतुर्थः। तदुक्तं गुर्वावल्यां ( श्लो० ३३८, ३३९ )

खरतरपक्षश्राद्धो, मंत्रिवरो गोवलः सकलरात्रिम्।
अनशनसिद्धो भक्त्या–ऽगुरुकर्पूरादिभोगकरः॥ १॥

ईपत्रिद्रामाप्याऽपश्यत्स्वप्ने सुदिव्यरूपधरान्।
तानिति वदतस्तुर्ये, कल्पे स्मः शक्रसमविभवाः॥ २॥ युग्ममिति॥

तत्कृता ग्रंथाश्च—श्रीआवश्यकौघनिर्युक्त्याद्यनेकग्रंथावचूर्णयः, श्रीमुनिसुव्रतस्तव-घनौघनवखण्डपार्श्वनाथस्तवादि च॥

श्रीकुलमण्डनसूरीणां च वि० नवाधिके चतुर्दशशते १४०९ जन्म, सप्तदशाधिके १४१७ व्रतं, द्विचत्वारिंशदधिके १४४२ सूरिपदं, पंचपंचाशदधिके १४५५ स्वर्गः॥ सिद्धान्तालापकोद्धारः विश्वश्रीधरेत्यादिअष्टादशारचक्रबंधस्तव–गरीयो० हारबंधस्तवादयश्च तत्कृतग्रन्थाः।

श्रीगुणरत्नसूरीणां चासाधारणो नियमः। तदुक्तम् ( गु० श्लो० ३८१ )

जगदुत्तरो हि तेषां, नियमोऽष्टभरोपविकथानां।
आसक्तां मुनितरमां, वदति चरित्राद्रिनिर्मलत्वात्॥ १॥ इति

तत्कृताश्च ग्रंथाः—क्रियारत्नसमुच्चयः, षड्दर्शनसमुच्चयबृहद्वृत्त्यादयः॥
श्रीसाधुरत्नसूरीणां कृतिर्यतिजीतकल्पवृत्त्यादिकेति॥ ५॥

५० पञ्चेति, श्रीदेवसुंदरसूरिपट्टे पंचाशत्तमः श्रीसोमसुन्दरसूरिः।

तस्य वि० त्रिंशदधिके चतुर्दशशते १४३० वर्षे मा० व० चतुर्दश्याम् शुक्रे जन्म, सप्त-त्रिंशदधिके १४३७ व्रतं, पञ्चाशदधिके १४५० वाचकपदं, सप्तपञ्चाशदधिके १४५७ सूरिपदं॥

यमष्टादशशत १८०० साधुपरिकरितं सत्क्रियापरायणं महामहिमालयं गुरुं दृष्ट्वा रुष्टैर्द्रव्यलिंगिभिरेकः पंचशतद्रविणदानेन सशस्त्रः पुमांस्तद्वधायोदीरितः। स च दुर्धिया वसतौ प्रविष्टो यावदनुचितकरणाय यतते तावच्चन्द्रोद्योते जाते सति निद्रालुभिरपि श्रीगुरुभी रजोहरणेन प्रमृज्य पार्श्वं परावर्तितं, तद् दृष्ट्वाऽहो निद्रायामपि क्षुद्रप्राणिकृपापरमेनमपराध्य " कस्यां गतौ मे गति " रिति विचारणया परलोकभीतो गुरुपादयोर्निपत्य " क्षमध्वं मेऽपराध " मिति वचसा गुरुं प्रबोध्य निजव्यतिकरं कथितवान्। सोऽपि गुरुभिर्मधुरवाचा तथोदीरितो यथा प्रव्रजित इति वृद्धवचः ॥

तथा यस्य ज्ञानवैराग्यनिधेर्गुणगणप्रतीतिः परपक्षेऽपि प्रतीता। तदुक्तं गुरुगुणरत्नाकरे ( सर्ग २, श्लोक ६२ )—

आकर्ण्य यद्गुणगणं गृहिणः प्रहृष्टा, लेखेन दुष्कृततततीरतिदूरदेशात्।
विज्ञप्य केऽपि कृतिनः परपक्षभाजोऽ-प्याऽऽलोचनां जगृहुरास्यकजेन येषां ॥ १ ॥ इति

तत्कृतिश्च-योगशास्त्रोपदेशमालापडावश्यकनवतत्त्वादिबालावबोधभाष्यावचूर्णि--कल्याणकस्तोत्रादिनीति।

तच्छिष्यास्तु—१ श्रीमुनिसुन्दरसूरिः, २ कृष्णसरस्वतीविरुदधारक-श्रीजयसुन्दरसूरिः, ३ महाविद्याविडंबनटिप्पनकारक-श्रीभुवनसुन्दरसूरिः, ४ कण्ठगतैकादशांगीसूत्रधारकदीपावलिकाकल्पादिकारक-श्रीजिनसुन्दरश्चेति चत्वारः। तैः परिकरितो राणपुरे श्रीधरणचतुर्मुखविहारे ऋषभाद्यनेकशतबिंबप्रतिष्ठाकृत् ॥ अनेकभव्यप्रतिबोधादिना प्रवचनमुद्भाव्य वि० नवनवत्यधिकचतुर्दशशत १४९९ वर्षे स्वर्गभाक्।

५१ मुनिसुन्दरेगवण्णोत्ति, श्रीसोमसुन्दरसूरिपट्टे एकपंचाशत्तमः श्रीमुनिसुन्दरसूरिः। येनानेकप्रासादपद्मचक्रषट्कारकक्रियागुप्तकाऽर्धभ्रमसर्वतोभद्रमुरजसिंहासनाऽशोकभेरीसमवसरणसरोवराऽष्टमहाप्रातिहार्यादिनव्यत्रिशतीबंधतर्कप्रयोगाद्यनेकचित्राक्षरद्व्यक्षरपंचवर्गपरिहाराद्यनेकस्तवमय--"त्रिदशतरंगिणी" नामधेयाष्टोत्तरशतहस्तमितो लेखः श्रीगुरूणां प्रेषितः ॥ चातुर्वैद्यवैशारद्यनिधिरुपदेशरत्नाकरप्रमुखग्रन्थकारकः ॥ स्तंभतीर्थे दफरखानेन " वादिगोकुलसंड " इति भणितः, दक्षिणस्यां " कालीसरस्वती "ति प्राप्तविरुदः, अष्टवर्षगणनायकत्वानंतरं वर्षत्रिकं " युगप्रधानपदव्युदयी " ति जनैरुक्तः, अष्टोत्तरशत १०८ वर्तुलिकानादोपलक्षकः, बाल्येऽपि सहस्राभिधानधारकः, संतिकरमिति समहिमस्तवनकरणेन योगिनीकृतमार्युपद्रवनिवारकः, चतुर्विंशतिवार २४ विधिना सूरिमंत्राराधकः ॥ तेष्वपि चतुर्दशवारं यदुपदेशतः स्वस्वदेशेषु चंपकराजदेपाधारादिराजभिरमारिः प्रवर्तिता। सीरोहीदिशि सहस्रमल्लराजेनाऽप्यमारिप्रवर्तने कृते येन तिड्डकोपद्रवो निवारितः।

श्रीमुनिसुन्दरसूरेर्वि० षट्त्रिंशदधिके चतुर्दशशत १४३६ वर्षे जन्म, त्रिचत्वारिंशदधिके १४४३ व्रतं, षट्षष्ठ्यधिके १४६६ वाचकपदं, अष्टसप्तत्यधिके १४७८ द्वात्रिंशत्सहस्र ३२००० टंकव्ययेन वृद्धनागरीयसं० देवराजेन सूरिपदं कारितं, त्र्युत्तरपंचदशशत १५०३ वर्षे का० शु० प्रतिपत् १ दिने स्वर्गभाक् ॥

५२ बावण्णोत्ति, श्रीमुनिसुन्दरसूरिपट्टे द्विपंचाशत्तमः श्रीरत्नशेखरसूरिः। तस्य वि० सप्तपंचाशदधिके चतुर्दशशत १४५७ वर्षे क्वचिद्वा द्विपंचाशदधिके १४५२ जन्म, त्रिषष्ठ्यधिके १४६३ व्रतं, त्र्यशीत्यधिके १४८३ पण्डितपदं, त्रिनवत्यधिके १४९३ वाचकपदं, द्व्युत्तरे पंचदशशते १५०२ वर्षे सूरिपदं, सप्तदशाधिके १५१७ पोषवदिषष्ठीदिने ६ स्वर्गः। स्तंभतीर्थे बांबीनाम्ना भट्टेन "बालसरस्वती" ति नाम दत्तं ॥

तत्कृता ग्रंथाः—१ श्राद्धप्रतिक्रमणवृत्ति, २ श्राद्धविधिसूत्रवृत्तिः, ३ आचारप्रदीपश्चेति।

तदानीं च लुंकाख्यात्लेखकात् वि० अष्टाधिकपंचदशशत १५०८ वर्षे जिनप्रतिमोत्थानपरं लुंकामतं प्रवृत्तं ॥ तन्मते वेषधरास्तु वि० त्रयस्त्रिंशदधिकपंचदशशत १५३३ वर्षे जाताः। तत्र प्रथमो वेषधारी भाणाख्योऽभूदिति ॥ १६ ॥

तेवण्णो पुण लच्छी-सायर सूरीसरो मुणेअव्वो ५३ ।
चउवण्णु सुमइ साहू ५४, पणवण्णो हेमविमलगुरू ५५ ॥ १७ ॥

५३-तत्पट्टे श्रीलक्ष्मीसागरसूरिः। ५४- तत्पट्टे श्रीसुमतिसाधुसूरिः। ५५-तत्पट्टे श्रीहेमविमलसूरिः।

व्याख्या—५३ तेवण्णोत्ति, श्रीरत्नशेखरसूरिपट्टे त्रिपंचाशत्तमः श्रीलक्ष्मीसागरसूरिः।

तस्य वि० चतुष्पष्ठ्यधिके चतुर्दशशत १४६४ वर्षे भाद्र० वदि द्वितीयादिने जन्म, सप्तत्यधिके १४७७ दीक्षा, षण्णवत्यधिके १४९६ पंन्यासपदं, एकाधिके पंचदशशत १५०१ वर्षे वाचकपदं, अष्टाधिके १५०८ सूरिपदं, सप्तदशाधिके १५१७ गच्छनायकपदं ॥

५४ चउवण्णुत्ति, श्रीलक्ष्मीसागरसूरिपट्टे चतुष्पंचाशत्तमः श्रीसुमतिसाधुसूरिः।

५५ पणवण्णोत्ति, श्रीसुमतिसाधुसूरिपट्टे पंचपंचाशत्तमः श्रीहेमविमलसूरिः।

यः क्रियाशिथिलसाधुसमुदाये वर्तमानोऽपि साध्वाचाराननतिक्रान्तः। यतो ब्रह्मचर्येण निष्परिग्रहतया च सर्व्वजनविख्यातो महायशस्वी संविज्ञसाधुसान्निध्यकारी। यद्दीक्षिता यन्निश्रिताश्च बहवः साधवः क्रियापरायणा आसन्। तच्चिह्नं समुदायानुरोधेन क्षमाश्रमणादिविहृतं पक्वान्नादिकं नात्मना भुक्तवान्।

ऋ० हाना-ऋ० श्रीपति-ऋ० गणपतिप्रमुखा लुङ्कामतमपास्य श्रीहेमविमलसूरिपार्श्वे प्रव्रज्य तन्निश्रया चारित्रभाजो बभूवांसः ।

सद्युम्नं कंचिद् व्रतिनं ज्ञात्वा गणान्निष्काशयामास ।

न च तेषां क्रियाशिथिलसाधुसमुदायावस्थाने चारित्रं न संभवतीति शंकनीयं, एवं सत्यपि गणाधिपतेश्चारित्रसंभवात् ।

यदागमः—साले नामं एगे एरण्डपरिवारेत्ति ।

तदानीं वि० द्वाषष्ट्यधिकपंचदशशते १५६२ वर्षे " संप्रति साधवो न दृग्पथमायाती-" त्यादिप्ररूपणापरकटुकनाम्नो गृहस्थात् त्रिस्तुतिकमतवासितोत्कटुकनाम्ना मतोत्पत्तिः । तथा वि० सप्तत्यधिकपंचदशशत १५७० वर्षे लुङ्कामतान्निर्गत्य बीजाख्यवेषधरेण " बीजामती " नाम्ना मतं प्रवर्तितं ॥ तथा वि० द्विसप्तत्यधिकपंचदशशत १५७२ वर्षे नागपुरीयतपागणान्निर्गत्य उपाध्यायपार्श्वचंद्रेण स्वनाम्ना मतं प्रादुष्कृतमिति ॥ १७ ॥

सुविहिअमुणिचूडामणि, कुमयतमोमहणमिहिरसममहिमो ।
आणंदविमलसूरी-सरो अ छावण्णपट्टधरो ॥ १८ ॥

५६-तत्पट्टे श्रीआणंदविमलसूरिः ।

व्याख्या—५६ सुविहिअत्ति, श्रीहेमविमलसूरिपट्टे षट्पंचाशत्तमपट्टधरः सुविहित-मुनिचूडामणि-कुमततमोमथनसूर्यसममहिमा श्रीआणंदविमलसूरिः ।

तस्य च वि० सप्तचत्वारिंशदधिके पंचदशशत १५४७ वर्षे इलादुर्गे जन्म, द्विपंचाशदधिके १५५२ व्रतं, सप्तत्यधिके १५७० सूरिपदं ॥

तथा यो भगवान् क्रियाशिथिलबहुयतिजनपरिकरितोऽपि संवेगरंगभावितात्मा जिनप्रतिमा-प्रतिषेध-साधुजनाभावप्रमुखोत्सूत्रप्ररूपणप्रबलजलप्लाव्यमानं जननिकरमवलोक्य करुणारसावलिप्त-चेतो गुर्वाज्ञया कतिचित् संविग्नसाधुसहायो वि० द्व्यशीत्यधिकपंचदशशत १५८२ वर्षे शिथिला-चारपरिहाररूपक्रियोद्धरणयानपात्रेण तमुद्धृतवान्, अनेकानि चेभ्यानामिभ्यपुत्राणां च शतानि कुटुंबधनादिमोहं संत्याज्य प्रव्राजितानि ॥

" यो वादे जयी स नगरादौ स्थास्यति नाऽन्य " इति सुराष्ट्राधिपतिनामांकितलेख-मादाय सुराष्ट्रे साधुविहारनिमित्तं यदीयश्रावकः सुरत्राणदत्तपर्यस्तिकावाहनः प्रातसाहिप्रदत्त-" **मलिकश्रीनगदल** " विरुदः सा० तूणसिंहाख्यः श्रीगुरूणां विज्ञप्तिं कृत्वा संप्रतिभूपतिरिव पंन्यासजगर्षिप्रमुखसाधुविहारं कारितवान् ।

तथा जेसलमेर्वादिमरुभूमौ जलदौर्लभ्याद्दुष्करोऽयमिति धिया श्रीसोमप्रभसूरिभिर्यो विहारः प्रतिषिद्ध आसीत् सोऽपि व्यवहारः कुमतव्याप्तिभिया तत्रत्यजनानुकंपया च भूयो लाभहेतवे पुनरप्यनुज्ञातः । तत्रापि प्रथमं लघुवया अपि शीलेन श्रीस्थूलभद्रकल्पो वैराग्यनिधिर्निःस्पृहावधिर्यावज्जीवं जघन्यतोऽपि षष्ठतपोऽभिग्रही पारणकेऽप्याऽऽचाम्लादितपोविधायी महोपाध्यायश्रीविद्यासागरगणिर्विहृतवान् । तेन च जेसलमेर्वादौ खरतरान्, मेवातदेशे च वीजामतीप्रभृतीन्, मौरव्यादौ ( मौव्यादौ ) लुङ्कादीन् प्रतिबोध्य सम्यक्त्वबीजमुप्तं सदनेकधा वृद्धिमुपागतमद्याऽपि प्रतीतं ॥

तथा पार्श्वचन्द्रव्युद्ग्राहिते वीरमग्रामे पार्श्वचन्द्रमेव वादे निरुत्तरीकृत्य भूयान् जनो जैनधर्म्मं प्रापितः । एवं मालवकेऽप्युज्जयिनीप्रभृतिषु । किं बहुना ? संविग्नत्वादिगुणैर्यत्कीर्तिपताका पुनरद्यापि सज्जनवचोवातेनेतस्तत उद्धूयमाना प्रवचनप्रासादशिखरे समुल्लसति ।

क्रियोद्धारकरणानन्तरं च श्रीआणंदविमलसूरयश्चतुर्दश १४ वर्षाणि जघन्यतोऽपि नियततपोविशेषं विहाय षष्ठतपोऽभिग्रहिणः चतुर्थषष्ठाम्यां विंशतिस्थानकराधनाद्यनेकविकृष्टतपःकारिणश्च वि० षण्णवत्यधिकपंचदशशत १५९६ वर्षे चैत्रसितसप्तम्यामाजन्मातिचारोयालोच्याऽनशनं विधाय च नवभिरुपवासैरहम्मदावादनगरे स्वर्गं विभूषयामासुः ॥ १८ ॥

सिरिविजयदाणसूरी, पट्टे सगवण्णए ५७ अ अडवण्णे ।
सिरिहीरविजयसूरी ५८, संपइ तवगणदिणिंदसमा ॥ १९ ॥

५७–तत्पट्टे श्रीविजयदानसूरिः । ५८–तत्पट्टे श्रीहीरविजयसूरिः ।

व्याख्या—५७ सिरिविजयत्ति, श्रीआनन्दविमलसूरिपट्टे सप्तपंचाशत्तमः श्रीविजयदानसूरिः। येन भगवता स्तंभतीर्थाऽ–हम्मदावाद–पत्तन–महीशानक–गन्धारबंदिरादिषु महामहोत्सवपुरस्सरमनेकजिनबिंबशतानि प्रतिष्ठितानि ॥

यदुपदेशमवाप्य सूरत्राणमहिमूदमान्येन मंत्रिगलराजाऽपरनामकमलिकश्रीनगदलेनाऽश्रुतपूर्वा षाण्मासीं शत्रुंजयमुक्तिं कारयित्वा सर्वत्र कुंकुमपत्रिकाप्रेषणपुरस्सरसम्मीलिताऽनेकदेश–नगर–ग्रामादिसंघसमेतेन श्रीशत्रुंजययात्रा, मुक्ताफलादिना श्रीशत्रुंजयवर्धापनं श्रीभरतचक्रिवच्चक्रे ।

तथा यदुपदेशपरायणैर्गांधारीय सा० रामजी, अहम्मदावादसत्क सं० कूंअरजीप्रभृतिभिः शत्रुंजये चतुर्मुखाऽष्टापदादिप्रासादा देवकुलिकाश्च कारिताः । उज्जयन्तगिरौ जीर्णप्रासादोद्धारश्च ॥

तथा सूर्यस्येव यस्योदये तारका इवोत्कटवादिनोऽदृश्यतां प्रापुः ।

यो भगवान् सिद्धांतपारगामी अखण्डितप्रतापाज्ञोऽप्रमत्तया रूपश्रिया च श्रीगौतमप्रतिमो

गूर्जर-मालव-मरुस्थली-कुंकुणादिदेशेष्वप्रतिबद्धविहारी षष्टाऽष्टमादितपः कुर्वन्नपि यावज्जीवं घृताऽतिरिक्तविकृतिपंचकपरिहारी मादृशामपि शिष्याणां श्रुतादिदाने वैश्रमणाऽनुकारी अनेकवारैकादशांगपुस्तकशुद्धिकारी । किं बहुना ? तीर्थंकर इव हितोपदेशादिना परोपकारी सर्वजनप्रतीतः ॥

तस्य वि० त्रिपंचाशदधिके पंचदशशत १५५३ वर्षे जामलास्थाने जन्म, द्वाषष्टयधिके १५६२ दीक्षा, सप्ताशीत्यधिके १५८७ सूरिपदं, द्वाविंशत्यधिकषोडशशत १६२२ वर्षे वटपल्यामनशनादिना सम्यगाराधनपुरस्सरं स्वर्गः ॥

५८ अडवण्णेत्ति, श्रीविजयदानसूरिपट्टेऽष्टपञ्चाशत्तमाः श्रीहीरविजयसूरयः । किं विशिष्टाः ? संप्रति तपागच्छे आदित्यसदृशास्तदुद्योतकत्वात् । तेषां विक्रमतः त्र्यशीत्यधिके पञ्चदशशतवर्षे १५८३ मार्गशीर्षशुक्लनवमीदिने प्रह्लादनपुरवास्तव्य ऊकेशज्ञातीय सा० कुंराभार्यानाथीगृहे जन्म, षण्णवत्यधिके १५९६ कार्तिकबहुलद्वितीयायां २ पत्तननगरे दीक्षा, सप्ताऽधिके षोडशशतवर्षे १६०७ नारदपुर्यां श्रीऋषभदेवप्रासादे पण्डितपदम् । अष्टाधिके १६०८ माघशुक्लपञ्चमीदिने नारदपुर्यां श्रीवरकाणकपार्श्वनाथसनाथे श्रीनेमिनाथप्रासादे वाचकपदम् । दशाधिके १६१० सीरोहीनगरे सूरिपदम् ॥

तथा येषां सौभाग्यवैराग्यनिःस्पृहतादिगुणश्रेणेरेकमपि गुणं वचोगोचरीकर्तुं वाचस्पतिरप्यचतुरः । तथा स्तम्भतीर्थे येषु स्थितेषु तत्रत्य श्रद्धालुभिः टङ्कानामेका कोटिः प्रभावनादिभिर्व्ययीकृता । येषां चरणविन्यासे प्रतिपदं सुवर्णटङ्करूप्यनाणकमोचनं पुरतश्च मुक्ताफलादिभिः स्वस्तिकरचनं प्रायस्तदुपरि च रौप्यकनाणकमोचनं चेत्यादि संप्रत्यपि प्रत्यक्षसिद्धम् ॥

यैश्च सीरोह्यां श्रीकुन्थुनाथबिम्बानां प्रतिष्ठा कृता । तथा नारदपुर्यामनेकानि जिनबिम्बानि प्रतिष्ठानि । तथा स्तम्भतीर्थाऽहम्मदावादपत्तननगरादौ अनेकटङ्कलक्षव्ययप्रकृष्टाभिरनेकाभिः प्रतिष्ठाभिः सहस्रशो बिंबानि प्रतिष्ठितानि । येषां च विहारादौ युगप्रधानसमानाऽतिशयाः प्रत्यक्षसिद्धा एव ॥

तथाऽहम्मदावादनगरे लुङ्कामताऽधिपतिः ऋषिमेघजीनामा स्वकीयमताऽऽधिपत्यं "दुर्गतिहेतु" रिति मत्वा रज इव परित्यज्य पञ्चविंशतिमुनिभिः सह सकलराजाधिराजपातिसाहि-श्रीअकब्बरराजाज्ञापूर्वकं तदीयाऽऽतोद्यवादनादिना महामहपुरस्सरं प्रव्रज्य यदीय पादाम्भोजसेवापरायणो जातः । एतादृशं च न कस्याऽप्याऽऽचार्यस्य श्रुतपूर्वम् ।

किञ्च । येषामशेषसंविग्नसूरिशेखराणामुपदेशात् सहस्रशो गजानां लक्षशो वाजिनां गूर्जर-मालव-विहार-अयोध्या-प्रयाग-फतेहपुर-दिल्ली-लाहुर-मुलतान-क्याबिल -अजमेर--

बङ्गालयभिधानानामनेकदेशसमुदायात्मकानां द्वादशसूबानां चाऽधीश्वरो महाराजाधिराजशिरः-शेखरः पातिसाहिश्रीअकब्बरनरपतिः स्वकीयाऽखिलदेशेषु पाण्मासिकाऽमारिप्रवर्तनं जीजयाऽभिधानकरमोचनं च विधाय सकललोकेषु जाग्रत्प्रभावभवनं श्रीमज्जिनशासनं जनितवान् । तद् व्यतिकरो विस्तरतः श्रीहीरसौभाग्यकाव्यादिभ्योऽवसेयः । समासतस्त्वेवम् ।

एकदा कदाचित् प्रधानपुरुषाणां मुखवार्त्तया श्रीमद्गुरूणां निरुपमशमदमसंवेगवैराग्यादि-गुणगणश्रवणतश्चमत्कृतचेतसा पातिसाहि-श्रीअकब्बरेण स्वनामाङ्कितं फुरमानं प्रेष्याऽतिबहु-मानपुरस्सरं गन्धारबंदिरात् दिल्लीदेशे आगराख्यनगरासन्नश्रीफतेपुरनगरे दर्शनकृते समा-कारिताः सन्तोऽनेकभव्यजनक्षेत्रेषु बोधिबीजं वपन्तः श्रीगुरवः क्रमेण विहारं कुर्वाणाः विक्रमत एकोनचत्वारिंशदधिकषोडशशतवर्षे १६३९ ज्येष्टबहुलत्रयोदशीदिने तत्र संप्राप्ताः । तदानीमेव च तदीय प्रधानशिरोमणि-शेष(ख)श्रीअबलफजलाख्यद्वारा उपाध्यायश्रीविमलहर्षगणिप्रभृत्यने-कमुनिनिकरपरिकरिताः श्रीसाहिना समं मिलिताः । तदवसरे च श्रीमत्साहिना सादरं स्वागतादि पृष्ट्वा स्वकीयास्थानमण्डपे समुपवेश्य च परमेश्वरस्वरूपं, धर्मस्वरूपं च कीदृशं कथं च परमेश्वरः प्राप्यत इत्यादि धर्मगोचरो विचारः प्रष्टुमारेभे । तदनु श्रीगुरुभिरमृतमधुरया गिराऽष्टादशदोष-विधुरपरमेश्वरपञ्चमहाव्रतस्वरूपनिरूपणादिना तथा धर्मोपदेशो ददे यथा आगराद्रङ्गतोऽजमेरनगरं यावदध्वनि प्रतिक्रोशं कूपिकोपेतमनारान्विधाय स्वकीयाखेटककलाकुशलत्वप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणारोपणविधानादिना प्राग् हिंसादिकरणरतिरपि स भूपतिर्दयादानयतिसङ्गतिकर-णादिप्रवणमतिः सञ्जातः ।

ततोऽतीवसन्तुष्टमनसा श्रीसाहिना प्रोक्तम्-यत् पुत्रकलत्रधनस्वजनदेहादिषु निरीहेभ्यः श्रीमद्भ्यो हिरण्यादिदानं न युक्तिमत् । अतो यस्मदीयमन्दिरे पुरातनं जैनसिद्धान्तादिपुस्तकं समस्ति, तद्गृहीत्वाऽस्माकमनुग्रहो विधेयः । पश्चात् पुनः पुनराग्रहावशात् तत्समादाय श्रीगुरुभिः आगराख्य-नगरे चिरकोशतयाऽमोचि । तत्र साधिकप्रहरं यावद्धर्मगोष्ठीं विधाय श्रीमत्साहिना समनुज्ञाताः श्री-गुरवो महताडम्बरेण उपाश्रये समाजग्मुः । ततः सकलेऽपि लोके प्रवचनोन्नतिः स्फीतिमती सञ्जाता ।

तस्मिन् वर्षे आगराख्यनगरे चतुर्मासककरणान्तरं सुरीपुरे श्रीनेमिजिनयात्राकृते समागतैः श्रीगुरुभिः पुरातनयोः श्रीऋषभदेव-नेमिनाथसम्बन्धिन्योर्महत्योः प्रतिमयोस्तदानीमेव निर्मित-श्रीनेमिजिनपादुकायाश्च प्रतिष्ठा कृता । तदनु आगराख्यनगरे सा० मानसिंह कल्याणमल्लकारित-श्रीचिन्तामणिपार्श्वनाथादिबिम्बानां प्रतिष्ठा शतशः सुवर्णटङ्कव्ययादिना महामहेन निर्मिता । तत्तीर्थं च प्रथितप्रभावं सञ्जातमस्ति ।

ततः श्रीगुरवः पुनरपि फतेपुरनगरे समागत्य श्रीसाहिना साकं मिलिताः। तदवसरे च प्रहरं यावद्धर्मप्रवृत्तिकरणानन्तरं श्रीसाहिरवदत् यत् श्रीमन्तो मया दर्शनोत्कण्ठितेन दूरदेशादाकारिताः। अस्मदीयं च न किमपि गृह्यते। तेनाऽस्मत्सकाशात् श्रीमद्भिः सचित्तं याचनीयं येन वयं कृतार्था भवामः। तत् सम्यग् विचार्य श्रीगुरुभिस्तदीयाऽखिलदेशेषु पर्युषणापर्वसत्काऽष्टाह्निकायाममारिप्रवर्तनं वन्दिजनमोचनं चाऽयाचि, ततो निर्लोभताशान्ततायतिशयितगुणगणातिचमत्कृतचेतसा श्रीसाहिना अस्मदीयान्यपि चत्वारि दिनानि समधिकानि भवन्त्विति कथयित्वा स्ववशीकृतदेशेषु श्रावणवहुलदशमीतः प्रारम्य भाद्रपदशुक्लषष्ठीं यावदमारिप्रवर्तनाय द्वादशदिनामारिसत्कानि काञ्चनरचनाञ्चितानि स्वनामाङ्कितानि षट् फुरमानानि त्वरितमेव श्रीगुरूणां समर्पितानि। तेषां व्यक्तिः—प्रथमं गूर्जरदेशीयं, द्वितीयं मालवदेशसत्कं, तृतीयं अजमेरदेशीयं, चतुर्थं दिल्लीफतेपुरदेशसम्वन्धि, पञ्चमं लाहुरमुल्तानमण्डलसत्कम्, श्रीगुरूणां पार्श्वे रक्षणाय षष्टं देशपञ्चकसम्वन्धि साधारणं चेति। तेषां तु तत्तद्देशेषु प्रेषणेनाऽमारिपटहोद्घोषणवारिणा सिक्ता सतो पुराऽज्ञायमाननामाऽपि कृपावल्ली सर्वत्राऽऽर्याऽनार्यकुलमण्डपेषु विस्तारवती वभूव।

तथा वन्दिजनमोचनस्याऽप्यङ्गीकारपुरस्सरं श्रीगुरूणां पार्श्वादुत्थाय तदैवाऽनेकगव्यूतमिते डाम्ररनाम्नि महासरसि गत्वा साधुसमक्षं स्वहस्तेन नानाजातीयानां देशान्तरीयजनप्राभृतीकृतानां पक्षिणां मोचनं चक्रे। तथा प्रभाते कारागारस्थवहुजनानां वन्धनभञ्जनमप्यकारि। एवमनेकशः श्रीमत्साहेर्मिलनेन श्रीगुरूणां धरित्रीमरुमण्डलादिषु श्रीजिनप्रासादोपाश्रयाणामुपद्रवनिवारणायानेकफुरमानविधापनादिना प्रवचनप्रभावनादिप्रभावो यो लाभोऽभवत् स केन वर्णयितुम् शक्यते ?।

तदवसरे च संजातगुरुतरगुरुभक्तिरागेण मेडतीय सा० सदारंगेण मार्गणगणेभ्यो मूर्तिमदगजदानद्विपशदऽश्वदानलक्षप्रासादविधानादिना, दिल्लीदेशे श्राद्धानां प्रतिगृहं सेरद्वयप्रमाणखण्डलम्भनिकानिर्माणादिना च श्रीजिनशासनोन्नतिश्चक्रे। तथैका प्रतिष्टा सा० थानसिंघकारिता। अपरा च सा० दूजणमल्लकारिता श्रीफतेपुरनगरेऽनेकटङ्कलक्षव्ययादिना महामहोत्सवोपेता विहिता। किञ्च—

प्रथमचातुर्मासकमागराख्यद्रङ्गे, द्वितीय फतेपुरे, तृतीयमभिरामावादे, चतुर्थं पुनरप्यागराख्ये चेति चतुर्मासीचतुष्टयं तत्र देशे कृत्वा गूर्जरदेशस्थश्रीविजयसेनप्रभृतिसंघस्याऽऽग्रहवशात् श्रीगुरुचरणा धरित्रीपवित्रीकरणप्रवणान्तःकरणाः श्रीशेपूजी—श्रीपाहूजी—श्रीदानीआराऽभिधपुत्रादिप्रवरपरिकराणां श्रीमत्साहिपुरन्दराणां पार्श्वे फुरमानादिकार्यकरणतत्परानुपाध्यायश्रीशान्तिचंद्रगणिवरान् मुक्त्वा, मेडतादिमार्गे विहारं कुर्वाणा नागपुरे चतुर्मासीं विधाय क्रमेण

सीरोहीनगरे समागताः। तत्रापि नवीनचतुर्मुखप्रासादे श्रीआदिनाथादिबिम्बानाम्, श्रीअजितजिनप्रासादे श्रीअजितजिनादिबिम्बानां च क्रमेण प्रतिष्ठाद्वयं विधाय अर्बुदाचले यात्रार्थं प्रस्थिताः, तत्र विधिना यात्रां विधाय यावद्धरित्रीदिशि पादावधारणं विदधति तावत् महारायश्रीसुलतानजीकेन सीरोहीदेशे पुरा कराऽतिपीडितस्य लोकस्य अद्य पीडां न विधास्यामि, मारिनिवारणं च करिष्यामीत्यादिविज्ञप्तिं स्वप्रधानपुरुषमुखेन विधाय श्रीगुरवः सीरोह्यां चतुर्मासीकरणायाऽत्याग्रहात् समाकारिताः। पश्चात् तद्राजोपरोधेन, तद्देशीयलोकानुकम्पया च तत्र चतुर्मासीं विधाय क्रमेण रोहसरोतरमार्गे विहारं कुर्वन्तः श्रीपत्तननगरं पावितवन्तः। अथ पुरा श्रीसूरिराजैः श्रीसाहिहृदयाऽऽलवालरोपिता कृपालतोपाध्यायश्रीशान्तिचंद्रगणिभिः स्वोपज्ञकृपारसकोशाख्यश्रावणजलेन सिक्ता सती वृद्धिमती बभूव। तदभिज्ञानं च श्रीमत्साहिजन्मसम्बन्धी मासः, श्रीपर्युषणापर्वसत्कानि द्वादशदिनानि, सर्वेऽपि रविवाराः, सर्वसंक्रान्तितिथयः, नवरोजसत्को मासः, सर्वे ईदवासराः, सर्वे मिहरवासराः, सोफीआनकवासराश्चेति षाण्मासिकामारिसत्कफुरमानं, जीजीआभिधानकरमोचनसत्कानि फुरमानानि च श्रीमत्साहिपार्श्वात् समानीय धरित्रीदेशे श्रीगुरूणां प्राभृतीकृतानीति। एतच्च सर्वजनप्रतीतमेव। तत्र नवरोजादिवासराणां व्यक्तिस्तत्फुरमानतोऽवसेया। किञ्च, अस्मिन् दिल्लीदेशविहारे श्रीमद्गुरूणां श्रीमत्साहिप्रदत्तबहुमानतः निष्प्रतिमरूपादिगुणगणानां श्रवणवीक्षणतश्चानेकम्लेच्छादिजातीया अपि सद्यो मद्यमांसाशनजीवहिंसनादिरतिं परित्यज्य सद्धर्मकर्मासक्तमतयः, तथा केचन प्रवचनप्रत्यनीका अपि निर्भरभक्तिरतयः अन्यपक्षीया अपि कक्षीकृतसद्भूतोद्भूतगुणततयश्चाऽऽसन्। इत्याद्यनेकेऽवदाताः षड्दर्शनप्रतीता एव।

तथा श्रीपत्तननगरे चतुर्मासककरणादनु विक्रमतः षट्चत्वारिंशदधिकषोडशशत १६४६ वर्षे स्तम्भतीर्थे सा० तेजपालकारिता सहस्रशो रूप्यकव्ययादिनाऽतीवश्रेष्ठां प्रतिष्ठां विधाय श्रीजिनशासनोन्नतिं तन्वाना श्रीसूरिराजो विजयन्ते ॥ १९ ॥

सिरिविजयसेणसूरि-प्पमुहेहिं अणेगसाहुवग्गेहिं ।
परिकलिआ पुहविअले, विहरन्ता दिंतु मे भद्दं ॥ २० ॥

५९—तत्पट्टे श्रीविजयसेनसूरिः ।

व्याख्या—सिरित्ति, ते च श्रीहीरविजयसूरयः संप्रति ५९ विजयसेनसूरिप्रभृत्यनेकसाधुभिः परिकलिताः पृथ्वीतले विहारं कुर्वाणा मे मम भद्रं प्रयच्छन्तु ॥ २० ॥

इति महोपाध्यायश्रीधर्मसागरगणिविरचिता
श्रीतपागच्छपट्टावलीसूत्रवृत्तिः समाप्ता ॥ छ ॥

तथा चेयं श्रीहीरविजयसूरीणां निर्देशात् उपाध्याय श्रीविमलहर्षगणि—उपाध्याय श्री

